॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१८१



॥ श्रीः ॥

# कृतितत्त्वसंग्रहः

रचयिता

दैवज्ञ श्रीविघ्नेश्वरोपनामकः

तूफानी शर्मा

सम्पादकः

पं० रामचन्द्रझा व्याकरणाचार्यः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९६७

THE

KASHI SANSKRIT SERIES

181

१८१

# KṚTITATTVA SAṀGRAHA

By

Daivajña Śrī Vighneśwar Alias Tūfānī Śarmā

Edited By

Pt. Rāmchandra Jhā Vyākaraṇāchārya



THE

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-1

1967

# आमुखम्

विद्वाङ्कुर्वन्तु तत्रभवन्तो मान्या धर्मशास्त्रीया विद्वांसो यन्मैथिलकुलकमलदिवाकरैर्दैवज्ञभूषणैः श्रीविघ्नेश्वरोपनामकतूफानीशर्ममहोदयैर्निबद्धोऽयमल्पकायो धर्मशास्त्रीयनिबन्धः स्वसदृशेषु प्रकाशितग्रन्थेषु मान्यतम इति। तदयं त्याज्य-संस्कार-वधूप्रवेश-वास्तु-यात्रा-राज्याभिषेक-गोचर-संक्रान्ति-मिश्राख्येषु नवप्रकरणेषु विभक्तः। प्रतिप्रकरणञ्चास्मिन् विधिनिषेधयोः प्रामाणिकं विवेचनं परःशतस्मृतिनामोल्लेखपुरस्सरं वरीवर्ति। वीरमित्रोदय-कृत्यमहार्णवादि-महानिबन्धेषु च इतस्ततो विकीर्णानि व्यवहारोपयोगिस्मृति-वचनानि यथाप्रसंगं सुकौशलेनात्र संकलय्य प्रस्तुतानि।

प्रवशीर्णेषु तालपत्रेषु मिथिलाक्षरैर्लिखितस्यास्योद्धारश्रेयस्तु स्वर्गीय-पण्डितभुवनेश्वरझावैद्यमहोदयानामेव। ते हि पञ्चाशीतिवर्षा अपि स्वहस्तेनैवामुं नागराक्षरैर्विलिख्य मुद्रापयितुं मह्यमदुः। अहं चास्योपयोगित्वं विचार्य चिन्त्यात्तिमेव मुद्रणतस्ये अक्षिपम्। अनन्तरञ्चानेकत्र पाण्डुलिपित्रुटिभ्रान्तिवशात्तत्रत्यैर्मुद्राक्षरसंयोजकादिभिर्महदसौविध्यमस्मिन् कार्ये प्रकटितम्। तदा तस्य प्रकाशनाप्रकाशनयोरकृतनिर्णयोऽहममुमादाय काशिकेयविद्वत्समाजसन्निधमुपागच्छम्।

तत्र तावद् भैषज्यरत्नावल्याद्यायुर्वेदाकरग्रन्थसम्पादकैर्माननीयश्रीब्रह्मशंकरमिश्रैः, सुश्रुतसुधासंस्कृतव्याख्याव्याख्यातृभिः सभाष्यधर्मसिन्धुसम्पादकैर्दीनदीपिकारचयितृभिः श्रीसुदामामिश्रैर्वैद्यवरैश्च ग्रन्थस्याऽस्य सुसम्पादने महत्साहाय्यं प्रदत्तमेतदर्थं ते बहुशो धन्यवादार्हाः।

इदानीं चाशुतोषपार्वतीमानुग्रहवशात् सर्वाङ्गपरिपूरितः प्रकाश्य प्रस्तुतः। आशासे चायं सर्वसाधारणजनानां धर्मशास्त्रविषयिणीं व्यावहारिकीमनुपपत्तिं निवारयिष्यतीति।

दीपावली
वि सं २०२४

विद्वच्चरणचञ्चरीकः
—रामचन्द्र झा

# विषय-सूची

## त्याज्यप्रकरणम्



## संस्कारप्रकरणम्

## वधूप्रवेश द्विरागमनप्रकरणम्

## राज्याभिषेकप्रकरणम्



## गोचरप्रकरणम्



## संक्रान्तिप्रकरणम्



## वारुण्यादियोगप्रकरणम्

॥ श्रीः ॥

# कृतितत्त्वसंग्रहः

## अथ त्याज्यप्रकरणम्

गणेशं महेशं महेशं च नत्वा
मुदा ज्यौतिषां संग्रहं सङ्करोमि।
विचित्राणि शास्त्राणि चालोक्य यत्नाद्
गुरोः पादपद्मं मुहुः संविचिन्त्य ॥ १ ॥

तत्र सर्वकर्माङ्गभूतकालनिरूपणं, तत्रादौ त्याज्यप्रकरणमारभ्यते। अत्र श्रीपतिः—

तिथिस्तु युग्मे खलु पक्षरन्ध्रं भवेद् द्वितीयां दशमीं च हित्वा।
दशं विना स्युर्विषमा वरिष्ठाः स्मृता मुनीन्द्रैर्नवमीं विहाय ॥ २ ॥

वशिष्ठः—

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः स्मृताः ॥ ३ ॥
क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः।
भूताऽष्टमनुतत्त्वाङ्कदश शेषास्तु शोभनाः ॥ ४ ॥
दोषनाडीषु यत् कर्म शुभं सर्वं विनश्यति।
विवाहे विधवा नारी व्रात्यः स्याच्चोपनायने ॥ ५ ॥
सीमन्ते गर्भनाशः स्यात् प्राशने मरणं ध्रुवम्।
अग्निना दह्यते क्षिप्रं गृहारम्भे विशेषतः ॥ ६ ॥
राज्ञो राष्ट्रविनाशः स्यात् प्रतिष्ठायां न संशयः।
किमत्र बहुनोक्तेन कृतं कर्म विनश्यति ॥ ७ ॥

मुहूर्तचिन्तामणौ—

नन्दा भद्रा नन्दिकाख्या जया च।
रिक्ता भद्रा पूर्णसंज्ञा मृताऽर्कात् ॥ ८ ॥
आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा ॥ ९ ॥

पञ्चम्यादितिथयो मन्दाद्विलोमं प्रतिपद्बुधे ।
सप्तम्यर्केऽधमा पञ्चाशामाश्च रदधावने ॥ १० ॥

नारदः—

त्रयोदश स्युर्मिलने संख्यायास्तिथिवारयोः ।
क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः ॥ ११ ॥
सप्तम्यामर्कवारश्चेत् प्रतिपत्सौम्यवासरे ।
संवर्तयोगो विज्ञेयः शुभकर्मविनाशकृत् ॥ १२ ॥

रत्नमालायाम्—

नष्टेन्दुषष्ठीप्रतिपत्सु धीमान्
न जातु दन्तोत्कर्षणं विदध्यात् ।
कुर्वन्नवाप्नोति तदाशु नूनं
लक्ष्मीकुलक्षातिजनोपघातम् ॥ १३ ॥

काशीखण्डे—

प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे ।
दन्तानां काष्ठसंयोगाद् दहेदासप्तमं कुलम् ॥ १४ ॥

नारदः—

पञ्चम्यां तैलं तथाऽष्टम्यां मांसं चौरं तिथौ कलेः ।
पूर्णिमादर्शयोर्नारीसेवनं परिवर्जयेत् ॥ १५ ॥
व्यतीपाते च संक्रान्तावेकादश्यां च पर्वसु ।
अर्कभौमदिने विष्ट्यां नाभ्यङ्गं न च वैधृतौ ॥ १६ ॥

अत्र निषिद्धकर्मसु तात्कालिकतिथयो ग्राह्याः । तथाहि स्मृतौ—

स्नाने चाऽभ्यञ्जने चैव दन्तधावनमैथुने ।
तिथिस्तात्कालिकी ग्राह्या तथा मरणजन्मनोः ॥ १७ ॥

अथामलकस्नानतिथिनिषेधो दीपिकायाम्—

सप्तम्यचन्द्रानवमीषु देह-
श्रीसन्ततीश्चामलकैर्नरस्य ।
स्नानं निहन्त्यन्यदिने तु यच्चे
तिलैः श्रियं पुण्यकरं सदैव ॥ १८ ॥

विशेषतिथिवारनिषेधाख्यो दग्धयोग, तत्र वशिष्ठः—

द्वादश्येकादशीनागगौरीस्कन्दवसुष्वपि ।
नवम्यां दग्धयोगाख्यो भानुवारादितः क्रमात् ॥ १९ ॥

बृहस्पतिः—

षष्ठी शशाङ्के नवमी च शुक्रे
बुधे द्वितीया तपने चतुर्थी।
जीवेऽष्टमी सौरिकुजेऽह्नि सप्तमी
योगा विपाख्याः कुलनाशनाः स्युः॥ २० ॥

षष्ठ्यादितिथयः सप्त चन्द्रवारादिभिर्युताः।
क्रमात्पक्षद्वयेऽपि स्युः सप्त योगा हुताशनाः॥ २१ ॥

नारदः—

द्वितीया च धनुर्मीने चतुर्थी वृष कुम्भयोः।
मेषकर्कटयोः षष्ठी कन्यामिथुनयोऽष्टमी॥ २२ ॥
दशमी वृश्चिके सिंहे द्वादशी मकरे तुले।
एतास्तु तिथयो दग्धाः शुभे कर्मणि वर्जिताः॥ २३ ॥

तत्र शुक्लकृष्णपक्षविशेषः, वसिष्ठसंहितायाम्—

कार्मुके च झषे सिंहे मिथुने तौलिकुम्भयोः।
एषु दग्धा सिते पक्षेऽन्यत्र तु कृष्णपक्षके॥ २४ ॥

राजमार्तण्डे—

याः काश्चित्तिथयो दग्धा मासि मासि प्रकीर्तिताः।
ताः शुक्ला विषमे राशौ समे कृष्णाः प्रकीर्तिताः॥ २५ ॥

ज्योतिर्निबन्धे—

न वारदोषाः प्रवदन्ति रात्रौ
दैवेज्यदैत्येज्यदिवाकराणाम्।
दिवा शशाङ्कार्कजभूसुताना सर्वत्र
निन्द्यो बुधवारदोषः॥ २६ ॥

व्यवहारदर्पणे विद्यापतिः—

कुजे द्वितीयो भृगुजे तृतीयः सूर्ये चतुर्थो विदि पञ्चमश्च।
षष्ठोऽर्कजे सप्तम इन्दुवारे जीवेऽष्टमोऽर्धप्रहरो निषिद्धः॥ २७ ॥

बृहस्पतिः—

वेदबाणौ मुनिजरौ भुजतर्कौ शरानलौ।
नागरौद्रौ गुणजले रमायन्ता दिनेऽर्कतः॥ २८ ॥

अथ रात्रौ—

वेदतर्कौ मुनिजलौ बाहुपक्षौ शराचलौ।
नागनागौ रसगुणौ रसनागेन्दवो निशि॥ २९ ॥

रत्नावल्याम्—

बाणाः पक्षा रसा रामाः शैला वेदाश्च भूगजाः।
सूर्येन्दुतः ससौम्येज्यशुक्रार्किदिवसे दिवा ॥ ३० ॥

कश्यपः—

शैलाक्षिश्रुतयः सूर्ये चन्द्रे षड्वेदपर्वताः।
भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिपावकाः ॥ ३१ ॥
गुरुवारेऽग्निचन्द्रेभाः शुक्रे नेत्राद्रिवह्नयः।
शनौ चन्द्रेभवर्क्काः स्युः कुलिका यमघण्टकाः ॥ ३२ ॥
अर्धप्रहरसंज्ञांस्तान् मङ्गलेषु विवर्जयेत्।
वारदोषेण दुष्टन्तु लग्नं सर्वगुणान्वितम् ॥
त्यजेद् यथा पुरोडाशं वायसोपहतं तथा ॥ ३३ ॥

फलमाह वशिष्ठः—

निधनं प्रहरार्द्धे स्यान्निःसत्त्वं यमघण्टके।
कुलिके सर्वनाशः स्याद् रात्रावेते न दोषदाः ॥ ३४ ॥

अथ नक्षत्रवारदोषः, व्यवहारोच्चये—

ज्येष्ठावह्निमघाविशाखवसवो मैत्रं यमश्चेद्रवौ
सोमे सर्पविशाखपुष्यपवनाश्चित्रा त्वषाढाद्वयम्।
भौमे विश्वजलेशमित्रवसवः प्राग्भाद्रसर्वः शिरः
सौम्ये रेवतिपूर्वयोनिभरणीवस्त्वग्निमूलास्त्वपः ॥ ३५ ॥
जीवे मूलमघार्द्रयाम्यवरुणाः पूषा शशी रोहिणी
शुक्रे धातृभुजंगदेवतमघापुष्योत्तराफाल्गुनी।
सौरे त्वर्यममूलहस्तवरुणाः स्वात्याद्वयं रेवती
चित्राविष्णुमघाश्च सर्वसमये वर्ज्या अयोगा बुधैः ॥ ३६ ॥

श्रीपतिः—

मघार्कवारे शशिनि द्विदैवे
चार्द्रा कुजे सोमसुते च मूलम्।
गुरौ धनिष्ठा भृगुरोहिणी च
शनौ च हस्तो यमघण्टयोगाः ॥ ३७ ॥
त्यज रविमनुराधे वैश्वदेवञ्च सोमे
शतभिषमपि भौमे चन्द्रपुत्रेऽश्विनी च।
शशधरमपि जीवे सर्पदैवं च शुक्रे
रविसुतमपि हस्ते मृत्युयोगा भवन्ति ॥ ३८ ॥

रत्नावल्यां—

अश्विचित्रोत्तराषाढा मूलार्द्रा फल्गुरेवती।
सूर्याद्याः क्रकचा योगास्त्रिदशैरपि वर्जिताः ॥ ३९ ॥
मैत्रञ्च वैश्व वरुण द्वय च
मृग फणीन्द्रं करसञ्ज्ञक च ।
सूर्यादिवारे यदि सयुत स्यात्
शसन्ति सिद्धाः शुभकार्ययोगम् ॥ ४० ॥
भरणी भानुना चैव चित्रा सोमेन दृश्यते।
कुजे चैवोत्तराषाढा धनिष्ठा च बुधे तथा ॥ ४१ ॥
गुरावुत्तरफल्गुन्या ज्येष्ठा च भास्करे तथा।
मन्दे पौष्णे मघाणा च योगानेतान् परित्यजेत् ॥ ४२ ॥

शिशुबोधिन्यां—

मघा स्वाती रवौ प्रोक्ता गुरौ मूल च रेवती।
चित्रा च रोहिणी शुक्रे श्रवणः शतभिषा शनौ ॥ ४३ ॥
पुष्याश्लेषा पुन सोमेऽनुराधा कृत्तिका कुजे।
यमघण्टो बुधे सौम्ये आर्द्रा चोत्तरफल्गुनी ॥ ४४ ॥

चतुर्भुजनिबन्धे—

द्वितीया चानुराधाया त्र्युत्तराश्च तृतीयया।
पञ्चमी च मघायुक्ता चित्रास्वात्योस्त्रयोदशी ॥ ४५ ॥
एषु कार्यं कृतं चेत् स्यात् षण्मासान् मरण ध्रुवम्।
प्रतिपद्युत्तराषाढा नवम्या कृत्तिका यदि ॥ ४६ ॥
पूर्वभाद्रपदाष्टम्यामेकादश्या च रोहिणी ।
द्वादश्या च यदाश्लेषा त्रयोदश्या मघा यदि ॥ ४६ ॥

राजमार्तण्डे—

नात्र यात्रा प्रकर्तव्या कार्यान्तरमथाऽपि वा।
यमघण्टादियोगोऽयमनर्हः सर्वकर्मसु ॥ ४८ ॥

आवश्यके यमघण्टपरिहारमाह, गर्ग —

विन्ध्यस्योत्तरकूले तु यावता तुहिनाचलम्।
यमघण्टकृदोषोऽस्ति नान्यदेशे कदाचन ॥ ४९ ॥

अन्यच्च—

लग्नाच्छुभग्रहाः केन्द्रे त्रिकोणे वा स्थिता यदि।
चन्द्रो नापि न दोषः स्याद् यमघण्टादिसम्भवः ॥ ५० ॥

केचित्तत्राऽन्ये घटिकाः त्याज्या इत्युक्तम् । तद्यथा—
यमघण्टे त्यजेदष्टौ मृत्यौ द्वादशनाडिकाः ॥ ५१ ॥

अथैषां पापयोगानामपवादमाह वशिष्ठ —
दिवा मृत्युप्रदाः पापा दोषास्त्वेते न रात्रिषु ।
शुभकार्ये प्रसूतौ च सर्वदा परिवर्जयेत् ॥ ५२ ॥

नारदः—
हस्तर्क्षं सूर्यवारेन्द्वाविन्द्रर्भं प्रथमं कुजे ।
सौम्ये मित्रममाचार्ये पुष्यं पौष्णं भृगोः सुते ॥
रोहिणी मन्दवारे तु सिद्धियोगाह्वया अमी ॥ ५३ ॥

तत्र विशेषनिषेधो दैवज्ञमनोहरे यथा—
आदित्ये पञ्चमी हस्तसौम्यं षष्ठी च चन्द्रमम् ।
भौमाश्विनौ च सप्तम्यामनुराधा बुधेऽष्टमीम् ॥ ५४ ॥
गुरुपुष्यौ नवम्या च दशम्यां भृगुरेवती ।
एकादश्यां शनिब्राह्मे विषयोगाः प्रकीर्तिताः ॥ ५५ ॥

राजमार्तण्डे—
भौमाश्विनीं प्रवेशे च प्रयाणे शनिरोहिणीम् ।
गुरुपुष्यं विवाहे च सर्वथा परिवर्जयेत् ॥ ५६ ॥

नारद —
तिथिवारोद्भवा नेष्टा योगा वारर्क्षसम्भवाः ।
हूणवङ्गखशे त्याज्या देशेष्वेते शुभप्रदाः ॥ ५७ ॥

मुहूर्त चिन्तामणौ—
कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः ।
हूणवङ्गखशेष्वेव वर्ज्यास्त्रितयजास्तथा ॥ ५८ ॥

शुद्धोच्चये—
अयोगेषु च सर्वेषु याद्ययाम विवर्जयेत् ।
अयोगाः प्रशमं यान्ति चन्द्रशुद्धिहता इमे ॥ ५९ ॥

श्रीपति —
विरुद्धयोगास्तिथिवारजाता नक्षत्रवारप्रभवाश्च ये च ।
हूणेषु वंगेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते निषिद्धाः ॥ ६० ॥

महेश्वर.—
विष्कम्भाद्यघटीत्रयञ्च नवकं व्याघातजञ्चोद्भवं
गण्डे षट् त्वतिपूर्वकेष घटिकाः पञ्चैव शूले सदा ।

त्याज्या सार्पमघान्तरे च घटिका गण्डान्तसंज्ञे च यः
पूर्वर्क्षाश्विभयोस्तथा कुलिशभून्नक्षत्रमूलाह्वयोः ॥ ६१ ॥

श्रीपतिः—

विरुद्धसंज्ञा इह ये च योगा-
स्तेषामनिष्टः खलु पाद आद्यः।
सवैधृतिस्तु व्यतिपातनामा
सर्वोऽप्यनिष्टः परिघस्य चार्धम् ॥ ६२ ॥

बृहस्पतिः—

सिते चतुर्थ्यामन्त्यार्धमष्टम्याद्यार्द्धमेव च।
एकादश्यां परार्धन्तु पूर्वार्धे पूर्णशीतगौ ॥ ६३ ॥
कृष्णे तृतीयामन्त्यार्धं सप्तम्याद्यर्धमेव च।
दशम्यामुत्तरार्धन्तु चतुर्दश्यर्धमादितः ॥ ६४ ॥
विष्टाख्योऽयं महादोषः कथितोऽत्र समस्तगः।
तदानीं कृतसत्कर्म कर्त्रा सह विनश्यति ॥ ६५ ॥
भूतदस्रस्वराम्भोधिवसुवह्न्यग्निरूपकाः ।
यामेष्वेषु क्रमादास्यं भवेत् तिथ्यर्धविष्टिषु ॥ ६६ ॥

व्यवहारसमुच्चये—

दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं
हरिद्युः सप्तम्यां द्विदशघटिकान्ते त्रिघटिकम्।
तृतीया राकायां त्रयमघटिकाभ्यः परभवं
शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे ॥ ६७ ॥

करणान्याह गर्गः—

बवञ्च बालवं चैव कौलवं तैतिलं गरम्।
वणिजं विष्टिमित्याहुः करणानि चराणि तु ॥ ६८ ॥
अन्ते कृष्णचतुर्दश्याः शकुनिर्दर्शभागयोः।
भवेच्चतुष्पदं नागं किंस्तुघ्नं प्रतिपद्दले ॥ ६९ ॥

करणानयनन्तु महार्णवे—

गततिथिर्द्विघ्न्यद्रितुष्टा भवेत्तत्सैकं त्वपरे दलेथ शकुनेरिति ॥

वसिष्ठः—

वधबन्धविषास्त्राग्निच्छेदनोच्चाटनादि यत्।
तुरंगमहिषोष्ट्रादि कर्म विष्टयान्तु सिध्यति ॥
न कुर्यान्मङ्गलं विष्टयां जीवितार्थी कदाचन ॥ ७० ॥

काश्यपसंहितायां—

मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः।
नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाडिकाः॥ ७१॥
कार्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता।
कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवं जयः॥ ७२॥

अन्यत्र—

असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी।
सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च॥ ७३॥

गुरुः—

निशि पूर्वार्धजा विष्टिर्दिवा च परतः शुभा।
क्रमागता तु या विष्टिः सा वै हालाहलोपमा॥ ७४॥

ब्रह्मसिद्धान्ते—

दिवा परार्धजा विष्टिर्विष्टिरेव यदा निशि।
सा त्याज्या त्वन्यथा विष्टिः सर्वकर्मशुभप्रदा॥ ७५॥

लल्लः—

दिवा परार्धजा विष्टिः पूर्वार्धोत्था यदा निशि।
तदा विष्टिः शुभायेति कमलासनभाषिता॥ ७६॥

भूपालवल्लभे—

कन्यातुलामकरधन्विषु नागलोके
मेषालिवृषभेषु सुरालये स्यात्।
पाठीनसिंहघटकर्कटकेषु मर्त्ये
चन्द्रे वदन्ति मुनयस्त्रिविधां हि विष्टिम्॥ ७७॥

नारदः—

घटान्त्योत्तनृयुङ्मेषकन्याकीटतुलाधनुः।
कुलीरमृगसिंहाः स्युश्चैत्राद्याः शून्यराशयः॥ ७८॥
तुलामृगौ प्रतिपदि तृतीयायां मृगाङ्गनौ।
पञ्चम्यां वृषराशी द्वौ सप्तम्यां चापचन्द्रभे॥ ७९॥
नवम्यां हरिकीटौ द्वावेकादश्यां गुरौ कुटे।
त्रयोदश्यामन्त्यवृषौ दिनदग्धाश्च राशयः॥ ८०॥
मासदग्धाह्वयान् राशीन्दिनदग्धांश्च वर्जयेत्।
अष्टमी नवमी चैत्रे पञ्चयोरुभयोरपि॥ ८१॥

एकादशीमासशून्यास्तिथयः पञ्च कीर्तिताः ।
वैशाखे द्वादशी शून्या पक्षयोरुभयोरपि ॥ ८२ ॥
ज्येष्ठे त्रयोदशी शुक्ला कृष्णपक्षे चतुर्दशी ।
आषाढे कृष्णपक्षेऽपि षष्ठी चैवाथ सप्तमी ॥ ८३ ॥
श्रावणेऽपि द्वितीया च तृतीया पक्षयोर्द्वयोः ।
प्रौष्ठपद्या सिते कृष्णे द्वितीया प्रथमा तथा ॥ ८४ ॥
सिते कृष्णे चाश्वयुजि दशम्येकादशी परे ।
पक्षे चतुर्थी तिथयः पञ्चमीसहितास्तथा ॥ ८५ ॥
कार्तिके मास्यमावास्या सिते कृष्णे चतुर्दशी ।
सप्तमी चाष्टमी सौम्ये पक्षयोरुभयोस्तथा ॥ ८६ ॥
पौषमासे पौर्णमासी त्वमावास्या तथैव च ।
उभयोः पक्षयोर्माघे सप्तमी चाष्टमी सिते ॥ ८७ ॥
नवमी दशमी चैव तिथयः षट् प्रकीर्तिताः ।
तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः ॥ ८८ ॥

वशिष्ठः—

अष्टमी नवमी चैत्रे पक्षयोरुभयोरपि ।
माधवे द्वादशी त्याज्या पक्षयोरुभयोरपि ॥ ८९ ॥
तिथयो मासशून्याख्या वंशवित्तावनाशदाः ।
आद्यं श्राद्धं प्रकुर्वीत नैव मङ्गलमाचरेत् ॥ ९० ॥

एतेषां मासविशेषेण व्यवस्था उक्ता । नारदः—

तिथयो मासशून्याश्च शून्यलग्नानि यान्यपि ।
मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु च ॥ ९१ ॥
षड्रवन्धकाललग्नानि मासशून्याश्च राशयः ।
गौडमालवयोस्त्याज्यास्त्वन्यदेशे न गर्हिताः ॥ ९२ ॥

वशिष्ठः—

आर्द्रादिके ख्याति विरामकाले नक्षत्रवृन्दे दशके स्थितेऽर्के ।
विवाहचौलव्रतबन्धदीक्षासुरप्रतिष्ठादि न कार्यमेव ॥
मासोक्तमार्गेतरमङ्गलाढ्यं कुर्याच्च स्वप्नेऽपि तथा सुरारौ ॥ ९३ ॥

शुक्रास्तादिषु त्याज्यं ज्योतिःसारसागरे—

वापीकूपतडागयागगमने क्षौरं प्रतिष्ठाव्रतं
विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम् ।
तीर्थस्नानविवाहदेवभवनं मन्त्रादिदेवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तंगते भार्गवे ॥ ९४ ॥

तथाच—

बाले शुक्रे वृद्धे जीवे वृद्धे शुक्रे जीवे बाले।
जीवे सिंहे सिंहादित्ये जीवादित्ये नष्टे जीवे॥ ९५॥

नरः—

उपनयन गोदानपरिणयनगृहप्रवेशागमनानि।
अस्तमितेषु न कुर्यात् सुरगुरुभृगुपुत्रचन्द्रेषु॥ ९६॥

शातातप —

अस्तङ्गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे।
उद्यापनमुपारम्भं व्रतानां नैव कारयेत्॥ ९७॥

अस्तमयादिफलमाह बादरायणः—

गुरोरस्ते पतिं हन्याच्छुक्रास्ते चैव कन्यकाम्।
चन्द्रे नष्टे उभौ हन्यात् तस्मादस्तं विवर्जयेत्॥ ९८॥

विवाह इति शेष।

बालभावे स्त्रियं हन्याद् वृद्धभावे नरं तथा।
तस्माद् बाले च वृद्धे च विवाहं नैव कारयेत्॥ ९९॥

शार्ङ्गीयविवाहपटले—

विवाहो व्रतबन्धो वा यात्रा वा गृहकर्म च।
गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत्॥ १००॥

गर्ग- बृहस्पतिश्चापि—

अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत्॥ १०१॥

मरीचि —

गृहप्रवेशगोदानस्नानाश्रयमहोत्सवम् ।
न कुर्यान्मलमासे तु संसर्पोऽह्स्पतौ तथा॥ १०२॥

वशिष्ठ —

वापीकूपतडागादि प्रतिष्ठा यज्ञकर्म च।
न कुर्यान्मलमासे तु संसर्पोऽह्स्पतौ तथा॥ १०३॥

वृद्धगर्ग —

बाल्ले वा यदि वा वृद्धे शुक्रे चास्तंगते गुरौ।
मलमास इवैतानि वर्जयेद् देवदर्शनम्॥ १०४॥

गर्गः—

अपूर्वदेवता दृष्ट्वा शुचः स्नुर्नष्टमार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां परित्यजेत् ॥ १०५ ॥

अनावृत्ततीर्थयात्राम् = अपूर्वतीर्थयात्राम् ।

दीपिकायां—

नो शुक्रान्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मताराासु चाथ ।
नाडीनक्षत्रहानौ सुरगुरुरजनीनाथताराविशुद्धौ
प्रातः कार्या परीक्षा द्विततुचरगृहांशोदये सल्लग्ने ॥ १०६ ॥

व्यवहारोच्चये—

सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा ।
मलमासे न कर्तव्या परीक्षा जयकांक्षिणा ॥ १०७ ॥

बृहस्पतिः—

मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः ।
न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा ॥ १०८ ॥

यमः—

चन्द्रसूर्यग्रहे स्नानं श्राद्धं दानं जपादिकम् ।
कार्याणि मलमासेऽपि नित्यनैमित्तिकन्तथा ॥ १०९ ॥

अन्यच्च—

सीमंतजातकादीनि प्राशनान्तानि यानि च ।
न दोषो मलमासस्य मौढ्यञ्च गुरुशुक्रयोः ॥ ११० ॥

वसिष्ठः—

अतीतकालान्यखिलानि तानि कार्याणि सौम्यायनगे दिनेशे ।
क्षीणे गुरौ चाप्यथ दृश्यमाने तदुक्तपक्षाह्नदिनेष्वखण्डे ॥१११॥

वाराहः—

उद्यानचूडाव्रतबन्धदीक्षाविवाहयात्रादिवधूप्रवेशः ।
तडागयागत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कार्या ॥ ११२ ॥

देवीपुराणे—

सिंहसंस्थे गुरौ यत्नात् सर्वारम्भादि वर्जयेत् ।
प्रारब्धं न च सिध्येत महाभयकरं भवेत् ॥ ११३ ॥
पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रं न संशयः ।
कारको व्रजते नाशं सन्तानो म्रियतेऽचिरात् ॥ ११४ ॥

देवारामतडागादिप्रतिष्ठोद्यानगृहाणि च ।
विवाहचूडोपनयनव्रतबन्धादि नश्यति ॥ ११५ ॥

त्रिस्थलीसेतौ—

गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते ।
त्यजेद् यान महादानं व्रत देवविलोकनम् ॥ ११६ ॥

रत्नः—

नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बाल्यवृद्धेऽस्तगे वा
सन्न्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा ।
मौञ्जीबन्धोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थिते वा ॥ ११७ ॥

अयमपि निषेधो नियतकालविहितानां न भवति । उक्तञ्च शार्ङ्गीये—

सीमन्तजातकादीनि प्राशनान्तानि यानि वै ।
कर्तव्यानि न दोषोस्ति पञ्चाननगते गुरौ ॥ ११८ ॥

उपलक्षणमादेतं प्रकारान्तरेऽपि । तथाहि त्रिस्थलीसेतौ—

गोदावर्यां गयायाञ्च श्रीशैले ग्रहणद्वये ।
सुरासुरगुरूणाञ्च मौढ्यदोषो न विद्यते ॥ ११९ ॥

वायुपुराणे—

गयायां सर्वकालेषु पिण्डं दद्याद् विधानतः ।
अधिमासे जन्मदिने ह्यस्ते च गुरुशुक्रयोः ॥ १२० ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ १२१ ॥

अत्र श्राद्धस्य यात्रापूर्वकत्वाद् गयायात्रापि न निषिद्धेति । तथाहि—

सिंहनक्रगते जीवे त्वस्ते च गुरुशुक्रयोः ।
तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥ १२२ ॥

उपप्लवे शीतलभानुभान्वो-
रर्धोदये वा कपिलाख्यषष्ठम् ।
सुरासुरेज्यास्तमयेऽपि तीर्थ-
यात्राविधिः संक्रमणेऽपि शस्तः ॥ १२३ ॥

अथ अतिचारसमीक्षा

मात्स्ये—

यात्रोद्वाहप्रतिष्ठार्थं गृहचूडाव्रतादिकम् ।
वर्जयेद्यत्नतश्चैव जीवे वक्रातिचारगे ॥ १२४ ॥

कीतिभङ्गः प्रतिष्ठायां चौरभीतिस्तथाध्वनि।
तथोद्वाहे भवेन्मृत्युर्व्रते हानिर्भयं गृहे ॥ १२५ ॥

क्वचिदस्यापवादो विहितः। तथाहि राजमार्तण्डे—

वक्रातिचारगे जीवे वर्जयेन् तदनन्तरम्।
व्रतोद्वाहादिचूडायामष्टाविंशतिवासरान् ॥ १२६ ॥
पूर्वराशिं परित्यज्याापूर्णे संवत्सरे गुरुः।
अतीचारः स विज्ञेयः परराशिगतो यदा ॥ १२७ ॥

अत्र यदि बार्हस्पत्यमानेन संवत्सरभोगोपूर्तौ पूर्वराशिं त्यक्त्वा अपरराशिगतो भवति तदातिचारगो गुरुर्ज्ञेयः। तत्र विवाहादिमङ्गलकार्यं वर्जयेत्। तथाहि—

अतीचारगते जीवे तथा वक्रत्वमागते।
विवाहादीनि कार्याणि यत्नतः परिवर्जयेत् ॥ १२८ ॥

अत्र कियद्दिनानि वर्ज्यानीत्यतो व्यवस्थामाह—अतीचारो द्विविधः, लघ्वतीचारो महातिचारश्च। यद्यपूर्णसंवत्सर एव पूर्वराशिं त्यक्त्वा अपरराशिगतो भवति पुनर्वक्रगत्या तस्मात् पूर्वभमुपैति तदा लघ्वतीचारगो ज्ञेयः। तथा हि—

अतीचारगतो जीवः पूर्वभं यदि गच्छति।
लघ्वतीचारगो ज्ञेयस्तदा प्राहुर्मुनीश्वराः ॥ १२९ ॥

लघ्वतीचारोऽपि द्विविधः। तद्यथा—

यद्यपूर्णसंवत्सर एव पूर्वराशिं त्यक्त्वाऽपरराशिगतो भवति तस्मात् पुनर्वक्रगत्या पूर्वराशिमुपैति तेनापि यदि बार्हस्पत्यमानेन संवत्सरपूर्तिर्भवति तदापि लघ्वतीचारः तस्मिन्नष्टाविंशतिदिनानि त्यजेत्। तद्यथा—

वक्रे चैवातिचारे च वर्जयेन् तदनन्तरम्।
व्रतयात्रादिकं कार्यमष्टाविंशतिवासरान् ॥ १३० ॥

अथ यद्यपूर्णवत्सर एव पूर्वराशिं त्यक्त्वाऽपरराशिगतो भवति तस्मात् पुनः पूर्वराशिमुपैति यदि तत्र संवत्सरपूर्तिर्न भवति तथापि लघ्वतीचारगो ज्ञेयः। तत्र पंचचत्वारिंशद्दिनानि वर्ज्यानि। तद्यथा—

अतीचारगतो जीवः पूर्वभं यदि गच्छति।
लघ्वतीचारगो ज्ञेयस्तदा पक्षत्रयं त्यजेत् ॥ १३१ ॥

किञ्च—

पक्षो दशाहानि तथा त्रिपक्षी मासत्रिभागः खलु षट्कमासाः।
एकोतिचारः कथितो ग्रहाणां भौमादिकानां परतस्तु चाराः॥१३२॥

अथ महातिचारनिर्णयः

यदि अपूर्णसंवत्सर एव पूर्वराशि परित्यज्यापरराशिगतो भवति तस्मा- द्वक्रगत्या पुन पूर्वराशि नैति तदा महातिचारगो ज्ञेय । तद्यथा—

अतीचारगतो जीवः पूर्वभं नैव गच्छति ।
समाचरेद्य कर्माणि नो वा तत्रैव सुस्थितः ॥ १३३ ॥

अन्यच्च—

कृत्यातिचारं यदि पूर्वराशिं नायाति मन्त्री विबुधाधिपानाम् ।
यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम् ॥१३४॥

अत्र यदि पूर्वराशौ द्विधाभोगेन त्रिधाभोगेन वा बार्हस्पत्यसंवत्सरपूर्त्तिर्भवति तदा न महातिचार । यदि च खण्डद्वयभोगेन खण्डत्रयभोगेन वा तद्राशौ संवत्सर पूर्त्तिर्न भवति तदा महातिचार इति सिद्धान्त । तथा च—

गुरोः सखण्डभोगार्हे वर्षपूर्त्तिर्न जायते ।
तत्र तत्रातिचारः स्यादित्यूचुः पूर्वसूरयः ॥ १३५ ॥

तथा च सूर्यसिद्धान्तमतेन—

बृहस्पतेः खदगन्त्रिश्रियुगषड्वह्नयस्तथा ( ३६४२२०।११३८ )

अत्र चतुर्युगकुदिनानि

उदयादुदयं भानोर्भूमिसावनवासरा ।
वसुद्व्यष्टाद्रिरूपाङ्क सप्ताद्रितिथयो युगे ॥

( १५७७९१७८२८।१३९ )

अत्रानुपात । यदि चतुर्युगकुदिनैरेतै १५७७९१७८२८ । चतुर्युगगुरुभोगाभगण- लभ्यन्ते तदैकेन किमित्यनुपातरते चतुर्युगगुरुभोगभगणा भाज्या चतुर्युगकुदिनानि हार । एव जातौ भाज्यभाजकौ $\frac{३६४२२० \times १}{१५७७९१७८२८}$ अत्र भाज्ये भाजकेन भक्ते लब्ध भगणस्थाने शून्य शेष षष्ठ्या गुणित छेदेन भक्त लब्धा कलाधःस्वाराशिस्था नामीष्टद्वादशगुण पुनश्छेदेन भक्त लब्ध राशिस्थाने शून्य शेषं त्रिशद्गुण भाजकेन भक्त लब्धमंशस्थाने शून्य शेष षष्ट्या गुणित छेदेन भक्त लब्धा कलास्थानसार शेषं राशिस्थानाभीष्टद्वादशगुण पुन छेदेन भक्त लब्धमंशस्थाने शून्यं शेष त्रिंशद्गुण भाजकेन भक्त लब्धमंशस्थाने शून्य शेष त्रिंशद्गुणं भाजकेन भक्तं लब्धमंशस्थाने शून्य शेष षष्ठ्या गुणित छेदेन भक्तं लब्धा कलास्थानसार षष्टिगुण भाज्यभक्त लब्धविकलाशेषाधिकानुपातेन बार्हस्पत्यभोगवर्षप्रमाणं क्रियते नवपञ्चाशिता ५६ शेष षष्टिगुण भाज्यभक्त लब्धा प्रविकलास्वमेवमग्रेऽपि अशौ तत

अन्यच्च—

अतीचारगते जीवे वृषे वृश्चिककुम्भयोः ।
तत्र उद्वाहिता कन्या सम्प्रीणीयात् कुलद्वयम् ॥ १४२ ॥

अन्यच्च—

मीने मेषे वृषे चैव तथा मिथुनकन्ययोः ।
अतीचारान्न दोषः स्यान्नियतं कालजोपजः ॥ १४३ ॥

इत्यादिवाक्यपर्यालोचनेनेदं गम्यते कर्कटमकरकुम्भमीनमेषवृषमिथुनेषु महातिचारेऽपि न दोषः कालजोपजो भवति । अतो विवाहादिसर्वमङ्गलकार्यं तत्र विधेयानीत्यर्थः । किञ्च बहुतरवाक्यनिषेधपरत्वात्पश्चात्कन्यादानादिकं कर्तुमर्हतीति । अतीचारेण यो राशिरिति वचनलाभमत्सरलोपे यद्विवाहादिकर्मानुष्ठानं तदेव तद्राशिव्यतिरिक्तराशौ गुर्वतीचारस्याप्यत्यन्तनिषिद्धत्वेन न तु वृषादिराशौ तदतीचारस्य सत्वे विवाहादिविधिपरम्, अशुद्धसमये विवाहादिकरणस्य दोषत्वनियमात् । यथा—"वरं विषं भुङ्क्ष्व मा चाण्डालगृहे भुङ्क्ष्वा" इति वाक्यं चाण्डालगृहाधिकरणकभोजनस्यैवात्यन्तनिवृत्तिं विधत्ते न तु विषभोजने प्रवर्तयति तथा । अथ लुप्तसंवत्सरमाह स्मृतौ —

पूर्वराशिं यदा त्यक्त्वाऽपूर्णे संवत्सरे गुरुः ।
लुप्तसंवत्सरो ज्ञेयः परगेऽगतो यदा ॥ १४४ ॥

अन्यच्च—

अतीचारं गतो जीवस्तं राशिं नैति चेत्पुनः ।
लुप्तसंवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥ १४५ ॥

अस्य सर्वराशिसाधारण्येन प्राप्तौ क्वचिदपवादः । तथाहि च्यवनः —

यदि भवेदतिचारगतो गुरु-
र्न पुनरेति निजभवनस्थितिम् ।
भवति लुप्तसमो मकरकुम्भयो-
र्वृषभवृश्चिकयोर्यदि न स्थितः ॥ १४६ ॥

अन्यच्च—

मासान् दशैकादश वा प्रभुज्य
राशेर्यदा राशिमुपैति जीवः ।
भुङ्क्ते न पूर्वञ्च पुनस्तथापि
न लुप्तसंवत्सरमाहुरार्याः ॥ १४७ ॥

लल्लः—

यदातिचारं सुरराजमन्त्री
करोति गोवृश्चिकमीनसंस्थः।
नायात्यसौ यद्यपि पूर्वराशिं
शुभाय पाणिग्रहणं वशिष्ठः॥ १४८॥

अन्यच्च—

वृषे मेषे झषे कुम्भे यद्यतीचारगो गुरुः।
न तत्र काललोपः स्यादित्याह गालवो मुनिः॥ १४९॥
मृगराशिगते जीवे दिनषष्टिं विवर्जयेत्।
अन्यत्र सिंहभागे तु विवाहादि विधीयते॥ १५०॥

राजमार्तण्डे—

सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः।
सर्वदेशेष्वयं त्याज्यो दम्पत्योर्निधनप्रदः॥ १५१॥

वशिष्ठ —

सिंहे सिंहांशके जीवे कलिङ्गे गौडगुर्जरे।
कालमृत्युरयं योगो दम्पत्योर्निधनप्रदः॥ १५२॥

इत्यतोऽवशिष्टेष्वंशेषु विवाहादि शुभं भवतीत्यर्थः। यथोक्तं राजमार्तण्डे—

सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेत्।
अत्यन्तशुभदा साध्वी धनधान्यसमन्विता॥ १५३॥

लल्ल —

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे।
गण्डक्याः पश्चिमे भागे मकरस्थो न दोषभाक्॥ १५४॥

सिंहस्थगुरुवर्जनीयो नर्मदोत्तरभाग एव तदुक्तं कालविधाने—

सिंहस्थितः सुरगुरुर्यदि नर्मदाया
तं वर्जयेत् सकलकर्मसु सौम्यभागे।
विन्ध्यस्य दक्षिणदिशि प्रवदन्ति चार्याः
सिंहांशके मृगगतावपि वर्जनीयः॥ १५५॥

लल्ल —

गोदावर्युत्तरतो यावद् भागीरथीतटं याम्यम्।
तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये॥ १५६॥

अर्थाद् गोदावरीदक्षिणदेशे भागीरथ्युत्तरदेशे च सिंहगुरुदोषो नास्ति ।

यदाह वशिष्ठः—

भागीरथ्युत्तरे कूले गौतमीदक्षिणे तथा ।
विवाहो व्रतबन्धो वा सिंहस्थेऽज्ये न दुष्यति ॥ १५७ ॥
मृगेन्द्रसंस्थिते जीवे मध्यदेशे करग्रहे ।
मृत्युयोगो ध्रुवं स्याद् दम्पत्योः पञ्चवर्षतः ॥ १५८ ॥

राजमार्तण्डे—

गुरौ हरिस्थे न विवाहमाहु-
र्हारीतगर्गप्रमुखा मुनीन्द्राः ।
यदा च माघी मघसंयुता स्यात्
तदा तु कन्योद्वहनं विदध्यात् ॥ १५९ ॥

चण्डेश्वरः—

मंगलेषु च केतूनां दर्शनञ्चाशुभं मतम् ।
तावदेव फलं दद्युर्यावत्तेषां हि दर्शनम् ॥ १६० ॥
केतोरस्तदिनादूर्ध्वं सप्तरात्राणि वर्जयेत् ।
यात्रोद्वाहव्रतारम्भे मंगलादिषु कर्मसु ॥ १६१ ॥

अथ गुर्वादित्यदोषमाह शौनकः—

एकराशिगतौ सूर्यजीवौ स्यातां यदा पुनः ।
व्रतबन्धविवाहादिशुभकर्माखिलं त्यजेत् ॥ १६२ ॥

यत्तु—

गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः ।
गुर्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु ॥ १६३ ॥

इति गुरुवचनं तदविचारितरमणीयम् । तथाहि—गुरुक्षेत्रे धनुर्मीनौ तत्र भानुगुर्वादित्यस्तद्वत् धनुरर्कस्य दक्षिणत्वादेव निषेधः सिद्धः । मीनार्कस्य तु यज्ञोपवीतातिरिक्तकार्यमात्रे निषेधः सिद्धः । तथा भानुक्षेत्रं सिंहस्तत्र गतो गुरुः गुर्वादित्य इत्यपि न तत्र सिंहस्थगुरुत्वादेव निषेधः सिद्धः । यदा त्वेकराशिस्थत्वं तदा यदि बाल्यवार्धक्यास्तमयदोषाणां सम्भवस्तर्हि तद्दोषस्याधिक्यन्यूनतारतम्यस्याभावो ध्येय इति । अथ विश्वघस्रपक्षनिषेधमाह—यस्मिन् पक्षे तिथिद्वयह्रासः स त्रयोदशदिनात्मकः पक्षोऽतिनिन्द्यः । तदुक्तं ज्योतिर्निबन्धे—

पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः ।
पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः ॥ १६४ ॥

अन्यच —

त्रयोदशदिने पक्षे तदा संहरते जगत् ।
अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः ॥ १६५ ॥

चण्डेश्वर —

त्रयोदशदिने पक्षे विवाहादि न कारयेत् ।
गर्गादिमुनयः प्राहुः कृत मृत्युस्तदा भवेत् ॥ १६६ ॥

ज्योतिर्निबन्धे—

उपनयन परिणयन वेश्मारम्भादिपुण्यकर्माणि ।
यात्रा द्विक्षयपक्षे कुर्यान्न जिजीविषुः पुरुषः ॥ १६७ ॥

अथ प्रसङ्गात् त्रयोदशदिनात्मक पक्ष कथ भवति कथञ्च न भवतीति विचार प्रस्तूयते । कस्मिंश्चित् पक्षे प्रतिपत्सोमवारे घटिकैका दशपलाधिका १।१० ततो द्वितीया क्षयोन्मुखत्वात् पक्षस्य सोमवार एवान्तर्हित अत एवावमाख्यो जाता यस्य षट्पलाधिका सप्तचत्वारिंशत् ( ४७।०६ ) तत पुनरपचयक्रमेण तिथीना चतुर्दश्यपि क्षय गताऽवमाख्या शुक्रवार एव ततः शनिवारे पूर्णिमाक्षयोन्मुखी चतुर्दशीतुल्या वा एतादृश पक्षस्त्रयोदशदिनात्मक सम्भवतीत्यादिक मुहूर्तचिन्तामणौ पीयूषधारायां द्रष्टव्यम् ।

एक पक्षे यदा यान्ति तिथयश्च त्रयोदश ।
त्रयस्तदा क्षय यान्ति वाजिनो मनुजा गजाः ॥ १६८ ॥

चण्डेश्वरः—

एकरात्र परित्यज्य कुर्यात् पाणिग्रह ग्रहे ।
यात्राया सप्तरात्रन्तु त्रिरात्र व्रतबन्धने ॥ १६९ ॥
ग्रहे रवीन्दोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् ॥ १७० ॥
अस्तमिते भृगुपुत्रे कन्या म्रियते वरश्च वागीशे ।
स्यादुभयोरपि मरण केतावुदिते करग्रहणे ॥ १७१ ॥

हेमाद्रौ—

त्रयोदश्यादिक वर्ज्य दिनाना नवक ध्रुवम् ।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥ १७२ ॥
द्वादश्यादितृतीयान्ते वेध इन्दुग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्त प्रकीर्तितः ॥ १७३ ॥
खण्डग्रहे तु यत्प्रोक्तमुभयत्र दिनत्रयम् ॥ १७४ ॥

ग्रहणात् पूर्वदिनमिदयं

मदनरत्ने नारदः—

उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे ।
नाखिले तु दिनं नेष्टं तद्वं नेष्टमृतुत्रयम् ॥ १७५ ॥
ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद् ग्रस्तोदये तथा ।
खण्डग्रस्ते त्रित्रिदिनं निःशेषे सप्त सप्त च ॥ १७६ ॥

वशिष्ठः—

सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत् ।
पदद्दिनादि त्रिभागोने अर्धग्रासे चतुर्दिनम् ॥
चतुर्थांशे त्रिरात्रं स्याद् ग्रहणे चन्द्रसूर्ययोः ॥ १७७ ॥

निःशेषे सप्त सप्त चेति । अत्र यद्यपि विशेषो नोक्तस्तथापि ग्रहणादनन्तरमेव ज्ञेयम् । उत्पातग्रहणादूर्ध्वं सप्ताहं निखिलग्रह इत्यत्र तथोक्तेः ।

अङ्गिराः—

सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् ।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकन्तु वर्जयेत् ॥ १७८ ॥

गर्गः—

सूर्यचन्द्रोपरागौ द्वौ महादोषावहावुभौ ।
सप्तरात्रं तयोरूर्ध्वं सर्वशोभननाशनम् ॥ १७९ ॥

इत्येतदपि सर्वग्रासपरतया योज्यम् । ग्रहणे तु कार्यस्यावश्यकत्वाद्विशेषपरिहार

उक्तो ज्योतिर्निबन्धे—

पञ्चदिनानि वशिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ।
यवनाचार्यस्य मतं पञ्च मुहूर्तान् दूषयति राहुः ॥ १८० ॥

गुरुः—

नित्यनैमित्तिके कार्ये जपहोमक्रियासु वा ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥ १८१ ॥

अत्र ग्रहो ग्रहणम् ।

मदनरत्ने नारदः—

उल्कादिपाते धरणीप्रकम्पे दाहे दिशां वज्रविदारणे वा ।
धूमे तथोल्काकरकाप्रपाते न कारयेन्मङ्गलकारि कार्यम् ॥ १८२ ॥
उल्कापातेऽशनिनिर्घाते तथैवाकालवर्षणे ।
छिद्रे सूर्ये विनिर्दिष्टे न कुर्यान्मङ्गलक्रियाम् ॥ १८३ ॥

धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्ययोः ।
ग्रहाणां मरले चैव न कुर्यान्मङ्गलक्रियाम् ॥ १८४ ॥
द्विसूर्यं वा त्रिसूर्यं वा दृष्ट्वा गगनमण्डलम् ।
रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत् ॥ १८५ ॥
युद्धे ग्रहाणामन्योन्यं निर्घाते राहुकम्पने ।
महोत्पातयुतान् कालान् सप्तरात्रं शुभे त्यजेत् ॥ १८६ ॥

शार्ङ्गीयविवाहपटले—

क्रूरैर्मुक्तं युक्तं भोग्यञ्च तथैव खेटयुद्धगतम् ।
ग्रहभिन्नं तुङ्गतम त्यजेन्महोत्पातदुष्टं यत् ॥ १८७ ॥

नारद —

ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ॥ १८८ ॥

गुरु —

उत्पातैः पीडितास्ताराः षण्मासैः प्रकृतिं ययुः ।
राहुकेतुविमुक्तं यदृक्षत्रयं निपीडितम् । १८९ ॥
शरसार्धेन युद्धेन ग्रहयुद्धगतञ्च भम् ।
नक्षत्रग्रहयोगेन यदुक्तं दोषसप्तकम् ॥
तदिदं सर्वकार्येषु शुभेषु परिवर्जयेत् ॥ १९० ॥

ग्रहयुद्धभेदाश्चत्वार । भेदोल्लेखांशुविमर्दनमपसव्यञ्चेति तदाह वराह —

आसन्नग्रमणोल्लेखांशुविमर्दनापसव्यैः ।
युद्धं चतुष्प्रकारं पराशराद्यैः मुनिभिरुक्तम् ॥ १९१ ॥

तल्लक्षणानि सूर्यसिद्धान्ते—

उल्लेखस्तारका स्पर्शो भेदो भेदः प्रकीर्तितः ।
युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ॥
अंशादूनेऽपसव्यं स्याद्युद्धमेकोऽत्र चेदणुः ॥ १९२ ॥

शार्ङ्गीयविवाहपटले—

यस्मिन्निधुं राहुरिभञ्च धिष्ण्यं गृह्णाति तत्षण्मृतुत्रयं स्यात् ।
पाणिग्रहे पुंमरणं विधत्ते द्वयोर्भयोश्चेद् द्वयमेव जह्यात् ॥ १९३ ॥

अथ शुभदोत्पातमाह वराह —

यत्राशनिर्महीकम्पाः सन्ध्यानिर्घातनिस्वनाः ।
परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥ १९४ ॥
द्रुमेभ्योऽन्नरसस्नेहमधुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शिवाय मधु माधवे ॥ १९५ ॥

तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनास्फोटधूमरेण्वनिलाकुलम् ॥ १९६ ॥
रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् ।
सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ १९७ ॥
शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् ।
कम्पोद्वर्तनवैकृत्यं रसनं दारणं क्षितेः ॥ १९८ ॥
नद्युदपानसरसां वृद्ध्यूर्ध्वतरणप्लवाः ।
शीरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥ १९९ ॥
दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे ॥ २०० ॥
गीतवादित्रनिर्घोषो वनपर्वतसानुषु ।
शस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः ॥ २०१ ॥
शीतानिलतुषारत्वं दर्शनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥ २०२ ॥
दिशो धूमान्धकाराश्च सनभोवनपर्वताः ।
उच्चैः सूर्योदयेऽस्ते वा हेमन्ते शोभनाः स्मृताः ॥ २०३ ॥
हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ।
कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥ २०४ ॥
चित्रगर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥ २०५ ॥
ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभप्रदाः ।
ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥ २०६ ॥

अथाऽन्यदोषा , दैवज्ञमनोहरे—

तिथीषु नागाद्रिगिरीषु वारिधिः
कुचाद्रिदिक्पावकविश्ववासवाः ।
मुनीभसंख्याप्रथमाद्विधेः क्रमात्
परं विषं स्याद् घटिकाचतुष्टयम् ॥ २०७ ॥

बृहस्पतिः —

घटीद्वयं च ऋक्षान्ते मासान्ते च दिनत्रयम् ।
वर्षान्ते वर्जयेत् पञ्च ग्रहणाद् दिनसप्तकम् ॥ २०८ ॥
ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयम् ।
वर्षान्ते वर्षनाशः स्याद् ग्रहणात् सर्वनाशनम् ॥ २०९ ॥

अथ वर्षं सौरवर्षपरम्—

सौराब्दान्ते त्यजेत्पक्षं चान्द्रे तु नवमं त्यजेत् ।
सावनान्ते त्रिभं त्याज्यं नाक्षत्रे पौष्णभास्त्र्यहम् ॥ २१० ॥

अथ लग्नदोषः, तत्र नारदः—

जामित्रशुद्ध्यैकविंशन्महादोषं विवर्जयेत् ।
एकविंशतिदोषाणां नामरूपफलानि च ॥ २११ ॥
पितामहोक्तं संचिन्त्य तानि वक्ष्ये समासतः ।
पञ्चाङ्गं शुद्धिरहितो दोषश्चाद्यः प्रकीर्तितः ॥ २१२ ॥
उदयास्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमात् ।
तृतीयः पापषड्वर्गो भृगुषट्कं कुजाष्टकम् ॥ २१३ ॥
गण्डान्तकर्तरीरिष्फमषडष्टेन्दुसग्रहः ।
दम्पत्योरष्टमं लग्नं राशेर्विषघटी तथा ॥ २१४ ॥
कुमुहूर्तो वारदोषः खर्जूरिकसमाङ्घ्रिभम् ।
ग्रहणोत्पातभं क्रूरविद्धर्क्षक्रूरसंयुतम् ॥
कुनवांशो महापातो वैधृतिश्चैकविंशतिः ॥ २१५ ॥

वसिष्ठः—

एकविंशन्महादोषास्ते च ब्रह्ममुखोद्गताः ।
कदाचिन्नैव सीदन्ति गुणानां कोटिकोटिभिः ॥ २१६ ॥
तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् ।
विवाहे विधवा नारी मरणं व्रतबन्धने ॥
ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् ॥ २१७ ॥

व्यवहारचण्डेश्वरः—

मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् ॥ २१८ ॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् ।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ॥ २१९ ॥

पृथ्वीचन्द्रोदये—

अजन्मतो जन्मदिने गृहे वा
कुर्याद्विवाहं न च जन्ममासे ।
ज्येष्ठर्क्षज्येष्ठे च सुताङ्गनानां
मिथो विवाहं न तु शुक्रमासे ॥ २२० ॥

बृहस्पतिः—

न जन्मधिष्ण्ये न च जन्ममासे
न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासे प्रथमस्य सूनो-
स्तथा सुतायाश्च हि मङ्गलानि ॥ २२१ ॥

मुहूर्तलक्ष्मीः—

जन्मनि मासि विवाहः
शुभदो जन्मर्क्षजन्मराश्योश्च ।
लग्ने जन्मनि शुभदः
शुभदो जन्मनि तिथौ शशिनि ॥ २२२ ॥

चण्डेश्वरः—

जन्मोदये जन्मसु तारकासु
मासेऽथवा जन्मनि जन्मभे वा ।
उद्वाहनाऽनेकविधानि धत्ते
सौख्यानि योगं खलु बान्धवानाम् ॥ २२३ ॥

जन्ममासे तु पुत्राढ्या धनाढ्या जन्ममोदये ।
जन्मभेषु भवेद्दूढा वृद्धा मन्तविवर्द्धिनी ॥ २२४ ॥

इदन्तु द्वितीयगर्भोत्पन्नविषयम्, तथाहि नारदः—

न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि च ।
नाद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥ २२५ ॥

जन्ममासे मतान्तराण्याह राजमार्तण्डः—

जातन्दिनं दूषयते वशिष्ठो ह्यष्टौ च गर्गो नियतं दशाभिः ।
जातस्य पक्षं किल भागुरिश्च शेषाःप्रशस्ताः खलु जन्ममासि ॥ २२६ ॥

ज्येष्ठमासि विवाहे पराशरादिभिर्विशेष उक्तः—

अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि ।
व्यत्ययो वा तयोस्तत्र ज्येष्ठमासः शुभप्रदः ॥ २२७ ॥

गर्गः—

ज्येष्ठायोः कन्यकायाश्च ज्येष्ठपुत्रस्य सर्वदा ।
विवाहो नैव कर्तव्यो यदि स्यान्निधनं ध्रुवम् ॥ २२८ ॥

मिहिरः —

ज्येष्ठे ज्येष्ठस्य कन्याया विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासः प्रशस्यते ॥ ३२६ ॥

अन्यच्च —

द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं सुखावहम् ।
ज्येष्ठत्रये न कुर्वीत विवाहं सर्वसम्मतम् ॥ ३३० ॥

नारद —

जन्मभाद्दशमं कर्म सङ्घातर्क्षं च षोडशम् ।
अष्टादशं सामुदायं त्रयोविंशं विनाशनम् ॥ ३३१ ॥
मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु ।

वसिष्ठः—

बालान्नभुक्तौ व्रतबन्धने च
राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभन्त्वनिष्टं सततं विवाहे
सीमन्तयानादिषु मङ्गलेषु ॥ ३३२ ॥

जन्ममासलक्षणमाह गर्गः—

आरभ्य जन्मदिवसाद्यावत्त्रिंशद्दिनं भवेत् ।
जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हितः ॥ ३३३ ॥

इति कुनितत्त्वसंग्रहे त्याज्यप्रकरणम् ।

---



# अथ संस्कारप्रकरणम्

तत्रादौ आद्यरजोदर्शनफलादिनिरूपणम् ।

मुहूर्तगणपतौ—

वैशाखे श्रावणे माघे मार्गाख्ये श्रावणाश्विने ।
शुक्लपक्षे शुभाहे च सद्विलग्ने तथा दिवा ॥ १ ॥
श्रवणत्रयेऽनुराधायां रेवतीद्वितये मृगे ।
हस्तत्रये च रोहिण्यां पुष्यभे चोत्तरासु च ॥ २ ॥
सितवस्त्रं शुभं स्त्रीणां प्रथमं पुष्पदर्शनम् ।
मध्यं ज्येष्ठपुनर्वस्वोर्मूले चान्यत्र निन्दितम् ॥ ३ ॥
अष्टम्यां द्वादशीषष्ठ्यो रिक्तादर्शे च संक्रमे ।
भद्रानिद्राव्यतीपाते ग्रहणे रुजि वैधृतौ ॥ ४ ॥
परतागृहे सन्ध्यां कुदेशे कृष्णवाससि ।
प्रायजोदर्शनं नेष्टं शान्त्या तु शुभदं भवेत् ॥ ५ ॥
प्रायजा विलयं यान्ति रजोदर्शनसम्भवम् ।
सर्वदोषास्तु सलग्ने सितेज्ययुतवीक्षिते ॥ ६ ॥

मासफलं चन्द्रिकायाम्—

चैत्रे तु प्रथमर्तौ स्यान्नारी वैधव्यभागिनी ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता भवेत् ॥ ७ ॥
शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा ।
नभस्ये दुर्भगा क्लिष्टा आश्विने च तपस्विनी ॥ ८ ॥
ऊर्जे त्वायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे च पुंश्चली नारी माघे पुत्रसुतान्विता ॥
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं भवेत् ॥ ९ ॥

रत्नसंग्रहे—

ज्येष्ठे च सुभगा नारी आषाढे धनसम्पदा ।
श्रावणे म्रियते कन्या भाद्रे च बहुरोगिणी ॥ १० ॥
आश्विने च मृतापत्या कार्तिके कुलनाशिनी ।
धर्मयुक्ता भवेन्मार्गे पौषे च रतिविह्वला ॥
माघे क्रोधवती नारी फाल्गुने बहवः सुताः ॥ ११ ॥

अत्र चन्द्रिकारत्नसंग्रहवचनयोर्विरोधाद् व्यावहारिकवचन पूर्वकथितचन्द्रिकोक्तमेव माह्यम् ।

अथ वारफलम्—

आदित्ये विधवा नारी सोमे चैव पतिव्रता ।
कुजे वन्ध्या विजानीयाद् बुधे सौभाग्यभागिनी ॥ १२ ॥
बृहस्पतौ पतिः श्रीमान् शुक्रे चैव बहुप्रजा ।
शनौ वन्ध्या विजानीयात् प्रथमा स्त्री रजस्वला ॥ १३ ॥

नारद—

अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ।
परिघस्य च पूर्वार्द्धे व्यतीपाते च वैधृतौ ॥ १४ ॥
संध्यासूर्यप्लवे विष्ट्यामशुभ प्रथमार्तवम् ।
रुग्णा पतिव्रता दुःखी पुत्रिणी भोगभागिनी ।
पतिव्रता क्लेशभागी रविवारादिषु क्रमात् ॥ १५ ॥

गर्गसंहितायाम्—

सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसन्तानमोदिनी ॥ १६ ॥
सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।
दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥ १७ ॥
साध्वी पतिप्रिया नित्य सुपुत्रा कष्टकारिणी ।
स्वकर्मनिरता हिंस्रा पुण्या पुत्रादिसंयुता ॥ १८ ॥
नित्यं धनचये सक्ता पुत्रधान्यसमन्विता ।
मूर्खा धाष्टा पुण्यवती दस्रर्क्षादेः क्रमात्फलम् ॥ १९ ॥

लग्नफलमुक्त दैवज्ञभूषणे—

मेषे सव्यभिचारा स्याद् वृषभे परभोगिनी ।
मिथुने धनभागाढ्या कर्कटे व्यभिचारिणी ॥ २० ॥
सिंहे तु पुत्रसंयुक्ता कन्याया श्रीमती तथा ।
विचक्षणा तुलायान्तु वृश्चिके च पतिव्रता ॥ २१ ॥
दुश्चारिणी धनुः पूर्वे त्वपरे च पतिव्रता ।
मकरे त्वन्नहीना तु कुम्भे निर्धनयुक्तता ॥
मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥ २२ ॥

रत्नसंग्रहे—

क्रिये पवित्रा गवि गोधनाढ्या धनान्विता मौढ्यवती तृतीये ।
कुलद्वयानन्दकरी चतुर्थे कृतप्रसूतिः किल सिंहलग्ने ॥२३॥
कन्याप्रसूतिस्त्ववला विलग्ने धनान्विता लग्नगते तुलाख्ये ।
अलौ विलग्न कुलटा,भिचारा धनुर्विलग्ने व्यभिचारिणी स्यात् ॥२४॥
मृगे प्रिया सज्जनहर्षिणी च कुलद्वयप्रीतिकरी घटाख्ये ।
वेश्येव मीने व्यभिचारिणी वा लग्ने फलं स्यादरजःप्रवृत्तौ ॥२५॥

नारदः—

कुलीरवृषचापान्त्यनृयुक्कन्यातुलाधराः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥ २६ ॥

गर्गः—

सुभगा श्वेतवस्त्रा स्याद् दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुगन्धिता ॥ २७ ॥
दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पिता तथा ॥ २८ ॥
मलिनाम्बरधरा नारी दरिद्रा स्याद्रजस्वला ।
वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ॥ २९ ॥
समाश्चेत् कन्यका चेति फलं स्यात् प्रथमार्तवे ॥ ३० ॥
सम्मार्ज्जनीकाष्ठतृणाग्नितुर्याद्धस्ते दधाना कुलटा तदा स्यात् ।
तल्पोपभोगे तपसि क्षितौ चेद् दृष्टं रजो भोगवती तदा स्यात् ॥३१॥

अथ स्नानफलं वशिष्ठसंहितायाम्—

ग्रामाद् बहिः परग्रामे नारी स्याद् व्यभिचारिणी ।
पतिव्रता पतिस्थाने सुशीला गृहमध्यतः ॥ ३२ ॥
ग्राममध्ये तु वृद्धिश्च विधवा च दिगम्बरा ।
उपरागे च दुःशीला आयुष्यञ्जलसन्निधौ ॥
वनमध्ये तु कन्याया धनधान्यसमृद्धिदा ॥ ३३ ॥

पक्षफलम्—

शुक्लपक्षे शुभं प्रोक्तमशुभं कृष्णपक्षके ।
शुभञ्चैव तु पूर्वाह्णे मध्याह्ने मध्यमं स्मृतम् ॥ ३४ ॥
अपराह्णे तु वैधव्यं पूर्वरात्रौ शुभं वदेत् ।
मध्यरात्रौ मध्यमं स्यात् पररात्रौ शुभं स्मृतम् ॥ ३५ ॥
अस्तंगते यदा सूर्ये या च नारी रजस्वला ।
जन्मन्येव विपत्तौ च यस्य हस्तस्य शर्वरी ॥ ३६ ॥

अथ रजस्वलास्नानं दैवज्ञवल्लभे—

ब्रह्मानुराधाश्विनिसोमभेषु हस्तानिलाखण्डलवासवेषु ।
विश्वार्यमर्क्षोत्तरभाद्रभेषु वराङ्गनास्नानविधिः प्रदिष्टः ॥ ३७ ॥
कार्कीव वन्ध्या भवतीह शुक्रे नष्टप्रजा स्नानविधौ बुधे च ।
सौरौ च मृत्युः पयसोऽस्ततेन्दौ भौमार्कजीव बहुपुत्रलाभः ॥ ३८ ॥

अथ प्रसूतीस्नानं दैवज्ञवल्लभे—

स्नाता प्रसूता सुता बुधेन स्नाता च वन्ध्या भृगुनन्दनेन ।
सौरौ मृतिः क्षीरदक्षिणे सोमे पुत्रार्थलाभो रविजीवभौमे ॥ ३९ ॥

ऋतुमत्या स्नानवार वा फलन्तत्रैव—

सरुक् पतिव्रता दीना पुत्रिणी भोगभागिनी ।
पतिव्रता क्लेशयुक्ता ऋतुस्नानेऽर्कवारतः ॥ ४० ॥

दैवज्ञमनोहरे—

वसु पूषा च सौम्यश्च करोऽब्जा तथाश्विनी ।
एभिः स्नाने तु नारीणां गर्भः सम्पद्यते पुनः ॥ ४१ ॥

अश्विन्यादयः नक्षत्राणि स्नानविधावुक्तानि । तत्रापि वस्वादिषु शीघ्रं गर्भो लब्धिर्भवति, अन्येषु किञ्चिद्विलम्बेनेत्यर्थः । सर्वथा हि निषिद्धभिन्नेषु स्नानं न कार्यमिति निष्कृष्टार्थः । उक्तञ्च—

कृत्तिका भरणी मूलमार्द्रा पुष्यः पुनर्वसुः ।
मघा चित्रा विशाखा च श्रवणा च यमस्तथा ॥ ४२ ॥
एताः प्राग्द्वारास्तारास्तासु स्नानं न कारयेत् ।
यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते ॥ ४३ ॥

अत्र च देशाचारतो व्यवस्थानुसन्धेया । शिष्टाचारस्यापि स्मृतिवन्मानत्वात् ।
दाक्षिणात्यास्तु चतुर्थ एव दिवसे स्नानमाहुश्चतुर्थेऽह्नि विशुद्ध्यतीति । भर्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वलेति वचनात् ।

मुहूर्तदर्पणे—

पुनर्वस्वोस्तथा चित्रा ज्येष्ठापुष्याश्विनेषु च ।
स्नायादृतुमती नारी शुभे वारे शुभे तिथौ ॥ ४४ ॥
रोहिणीद्वितये स्वातौ हस्तर्क्षे रेवतीद्वये ।
स्नायादृतुमती गर्भं विधत्ते शीघ्रमेव हि ॥ ४५ ॥

अथ गर्भाधानं श्रीधरीये —

षष्ठ्यष्टमी पञ्चदशी चतुर्थी
चतुर्दशीमप्युभयत्र हित्वा ।
शेषाः शुभाः स्युस्तिथयो निषेके
वाराः शशाङ्कार्यसितेन्दुजानाम् ॥ ४६ ॥

विष्णुप्रजेशार्यमित्रगिरीशपौष्ण-
मूलोत्तरावरुणभानि निषेककार्ये ।
पूज्यानि पुष्यवसुशीतकराश्विचित्रा
दित्याश्च मध्यमफला विफला स्युरन्ये ॥ ४७ ॥

वशिष्ठः—

प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनमन्यपक्षे ॥ ४८ ॥
ईशानतो गोमयमण्डलेन परिष्कृतेऽग्नौ जुहुयात् सदूर्वाम् ।
युग्मा घृताक्ताश्च समित्प्रमाणां गायत्रिकां साष्टसहस्रसंख्याम् ॥४९॥
शतप्रमाणामथवा चतस्रो शुभैर्यवैर्व्याहृतिभिस्तिलैश्च ।
ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेदन्नसुवर्णवस्त्रैः ॥ ५० ॥

शान्तिप्रकारस्तु पश्चाद्द्रष्टव्यः ।

विष्णुपुराणे—

चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्वाण्येतानि वर्ज्यानि रविसंक्रान्तिरेव च ॥ ५१ ॥
तैलस्त्रीमांससम्भोगी सर्वेष्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम नरकं प्रतिगच्छति ॥ ५२ ॥

वशिष्ठ —

पौष्णद्वये पित्र्यमघान्त्यसार्पे विष्णुद्वये नैधनजन्मभेषु ।
ग्रस्तास्तपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने ॥ ५३ ॥
व्यस्त्रये वैधृतिपातयोश्च विष्टयां दिवा पारिघपूर्वभागे ।
संध्यासु पर्वस्वपि मातृपित्रोर्मृतेऽह्नि पत्नीगमनं विवर्ज्यम् ॥ ५४ ॥

दिनेषु युग्मेषु च रक्ष्यमाण-
योगे सुतार्थी स्वसतीमुपेयात् ।
दिनेषु युग्मेषु च कन्यकार्थी
हित्वा च गण्डांस्तिथिराशिभानाम् ॥ ५५ ॥

नारदः—

शुचिर्भूत्वा युग्मतिथावनग्नाङ्गामयेत् प्रियाम्।
पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलादिपित्र्यभम्॥ ५६॥

कालनिर्णये—

रिक्ता पर्वाष्टमी षष्ठीदिवा जन्मत्रयं तथा।
पापग्रहाणां वाराश्च त्याज्याश्चैवानुगौ गतिः॥ ५७॥

व्यासः—

पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि।
मन्दौ स्त्रीग्रहवारौ सुधवर्जौ नपुंसकौ॥ ५८॥

अथ सीमन्तग्रहणमुपलक्षणं गर्भाधानस्यापि। युक्तश्चैतत् पुत्रार्थेषु स्त्रीगमने पुरुषग्रहवाराणामुपयोगे इति तावदिष्टं नपुंसकवारगमने। नपुंसकौ त्वविहितौ स्यादित्यनिष्टम्।

नारदः—

रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम्।
ततः शुद्धाः क्रियास्वेताः सर्ववर्णेष्वयं विधिः॥ ५९॥

भरद्वाजः—

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति॥ ६०॥

धर्मशास्त्रेऽपि—

मलैः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला।
पञ्चमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि॥ ६१॥

याज्ञवल्क्यः—

षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु॥ ६२॥

अत षोडशदिनमध्ये गर्भाधानं विधेयम्। बार्हस्पत्यसंहितायाम्—

हरिहस्तानुराधाश्च स्वातीवारुणरासयम्।
उत्तरात्रितयं सौम्यं रोहिणी च शुभाः स्मृताः॥
आधाने मूलमार्गान्त्यमशुभं समभन्यभम्॥ ६३॥

श्रीमत्पराशरोऽपि—

पित्र्यं पौष्णं नैरृतं तथापि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम्।
पुष्टः क्षामां पुत्रकामोऽभिगच्छन्
सल्लक्षण्यं पुत्रमाप्नोति पुण्यम्॥ ६४॥

तच्च गमनं मन्त्रपूर्वकम्, तदुक्तं विष्णुपुराणे—

ऋतावुपगमः शस्तः स्वपत्न्यां मन्त्रतो द्विजः ॥ ६५ ॥

मन्त्रस्तु—

विष्णुर्योनिं कल्पयतु गर्भं धेहि सिनीवालीत्येवमादयः ॥

एभिर्मन्त्रैर्दक्षिणेन पाणिनोपस्थमभिमृशेदिति गोभिलोक्तेः। दिनत्रयानन्तरं ऋतुगमने दिनफलमाह व्यासः—

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥ ६६ ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः।
नवम्यां सुभगा नारी दशम्याञ्चतुरः पुमान् ॥ ६७ ॥
एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सुता तनूद्याद्वर्णसङ्करकारिणी ॥ ६८ ॥
धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः।
प्रजायते चतुर्दश्यां गुणौघैर्जगतः पतिः ॥ ६९ ॥
राजपत्नी महाभागा सा राजवशगाऽथवा।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता ॥ ७० ॥
विद्यालक्षणसंपूर्णः सत्यवादी जितेन्द्रियः।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥ ७१ ॥

अत्र जन्मत्रयमपि वर्ज्यम्, तत्र बृहस्पतिः—

श्राद्धम्पित्र्यश्चिकित्सा च मैथुनाभ्यञ्जने तथा।
चौलोपनयनादीनि वर्जयेत् त्रिषु जन्मसु ॥ ७२ ॥

वृषमिथुनकुलीरसिंहकन्या-
स्तुलधरचापझषा शुभा भवन्ति।
यदि शुभफलशालिनोऽनुकूला
निधनविशुद्धियुता निषेककार्ये ॥ ७३ ॥

एतत्सर्वं रात्रौ एव दैवे पित्र्ये निषिद्धा। शुद्धिस्तु चतुर्थ्यामेव स्नानात्। एतदभ्यन्तरे सङ्कल्पितव्रतादौ पूजादिकं परद्वारा कारयितव्यम्, उपवासादयः स्वयमेव कार्याः। रत्नसंग्रहे—

कुण्डल्यो मनुजाधाननैश्चित्यं पुत्रकन्ययोः।
यदा यत्र यथा येन लिख्यते विधिनिर्मितम् ॥ ७४ ॥
रजोयोगऋतुस्त्रीणां षोडशैव दिनम्परम्।
यथाधानम्भवेत्तत्र तदाधानं भवेद् ध्रुवम् ॥ ७५ ॥

च्यवने पुंसमौ योगाद्योगा पुरनेविशौ।
ध्रुवमाधानिकौ विद्धि यदित्थं स्यान्नतु प्रिये॥ ७६॥

अस्यायमर्थः—

पुंवासरे समतिथौ पुरुषाख्यऋक्षे
योगो यदा समऋतौ ध्रुवमेव पुत्रः।
स्त्रीऋक्षकेऽपि तु तिथौ विषमे च कन्या-
योगे भृगौ यदि तदा खलु चन्द्रवारे॥ ७७॥

अथाधानयोगैराधानं स्यान्न किन्त्वाधानयोगबलाबलेनाधानं स्यात्तत्र तु आधानयोगेष्वाधानयोग्नैश्चियम्। यथा—

पुंसां यद्यत्रिदशायगौ शशिगुरू स्त्रीणां कुजेन्दू तथा
वीर्याढ्यौ स्वगृहांशगौ यदि तदा गर्भाय योगो भवेत्॥
लग्नं वा बलवत्तथास्मजसुतौ जीवो रवा गर्भकृन्
ज्ञात्वा योगबलाबलं सुमतिभिः कार्यः सदा निश्चयः॥ ७८॥
वासरे पुत्रदा गर्भे कुजार्कगुरवो ध्रुवम्।
कन्यादौ भृगुशीतांशू पण्डादौ शनिचन्द्रजौ॥ ७९॥

अत्र सङ्क्षिप्य लिख्यते—

पूर्वकथितशुभसमये स्वस्था सुस्नाता स्वलङ्कृता स्त्री युग्मरात्रे प्रियमभिव्रजेत् सार्धप्रहररात्रे चतुर्थप्रहरे वा पुंसः स्नानं गर्भधारणे "ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।" इति प्रामाण्यात्।

यदा तु दक्षिणे पार्श्वे देहे वहति मारुतः।
तदा रात्रौ व्रजेत् कान्तां पववर्ज्यं सकृद्बुधः॥ ८०॥
पीडात्रामौ भौमदृष्टे शशाङ्के मासं मासं योषितामार्तवं यत्।
त्र्यंशेशोन्तं यच्च रक्तं यवाभं तद्गर्भार्थं वेदनागन्धहीनम्॥ ८१॥

जगन्मोहने वसिष्ठः—

केन्द्रत्रिकोणेषु शुभस्थितेषु लग्ने शशाङ्के च शुभैः समेते।
पापैस्त्रिलाभारिगतैश्च यायात्पुंजन्मयोगेषु च सम्प्रयोगम्॥ ८२॥

नारदः—

वक्राद्यंशगते चन्द्रे लग्ने पुंग्रहवीक्षिते।
शुचिर्भूत्वा युग्मतिथौ ह्यनग्नाह्वामयेत्प्रियाम्॥ ८३॥
पुंग्रहाः सूर्यजीवाराः स्त्रीग्रहौ शशिभास्करौ।
नपुंसकौ सौम्यशौरी शिरोमात्रं विधुन्तुदः॥ ८४॥

अथस्त्रीपुनपुसकयोगा वशिष्ठेनोक्ताः—

आधानलग्ने विषमांशराशौ
जीवेन्दुनाभ्यां युतवीक्षिते वा ।
नान्यैः सुपुत्रस्त्वथ पापग्रहैः
पापी च मिश्रैर्नलिमिश्च मिश्रः ॥ ८५ ॥

ओजर्क्षांशे लग्नगे वीर्ययुक्ते
जीवेन्द्वर्के - रोजराश्यशमस्थैः ।
पुत्रन्म स्याद् व्यत्यये कन्यका स्याद्
मिश्रैः षण्ढो द्वयङ्गगैर्द्वित्रजन्मा ॥ ८६ ॥

षण्डो नपुंसक' ।

ओजेशकर्क्षाद्विषमर्क्षसंस्थः
पुंजन्मकारी रविसूनुरेकः ।
विचार्य वीर्यं पुरुषग्रहाणां
वाच्योऽथ पुत्रस्त्वथ पुत्रिका वा ॥ ८७ ॥

युग्मांशलग्ने बलयुक्तशुक्र-
निशाकराभ्यां युत ईक्षिते वा ।
नान्यैः सुकन्या त्वथ पापरूपा
पापैश्च शेष सुविचिन्त्य वाच्यम् ॥ ८८ ॥

एवमन्येऽपि पुजन्मादियोगा जातके द्रष्टव्या', एषु यस्मिन्कस्मिंश्चिद् पुजन्मयोगे पुत्रार्थी युग्मरात्रौ पत्नीं गच्छेत् कन्याजन्मयोगे कन्यार्थी विषमरात्रौ पत्नीं गच्छेदिति फलितार्थ । तत्र स्त्रीगमने रागत एव प्रवृत्तेर्नियम एवेति सिद्धान्तितम् 'ऋतौ गच्छेदि'ति यमस्मरणात् । 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जमि'ति गौतमस्मरणाच्च । ऋतावगमने प्रत्यवायोपि स्मर्यते—

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ ८९ ॥

इति यातातपोक्ते । अत एवैद्दूषणभयादधिकारिणा पित्रादिना कन्या गुणवते वरायावश्य देया तदाह याज्ञवल्क्य —

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ९० ॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥ ९१ ॥

इतिवीप्योक्ति । अग गर्भः । एव गर्भाधान विधाय निद्रासमये पुंसां किं कार्य-

मित्याह विष्णु —

निद्रासमयमासाद्य ताम्बूल वदनात् त्यजेत् ।
पर्यङ्कात् प्रमदा मालात् पुण्ड्र पुष्पाणि मस्तकात् ॥ ९२ ॥

## अथ पुंसवनम्

रत्नसंग्रहे—

द्वितीये च तृतीये च मासि पष्ठे च शस्यते ।
पक्षे चैव तथा शुक्ले रिक्तावर्जतिथौ पुनः ॥ ९३ ॥
मगले च रवौ चैव गुरौ चैव प्रशस्यते ।
पुत्रजन्मफलत्वाच नन्दा भद्रा प्रशस्यते ॥ ९४ ॥
मूलहस्तस्तथा पुष्यः श्रवणा च पुनर्वसू ।
आर्द्रा मृगशिराश्चैव द्वय भाद्रस्तथैव च ॥ ९५ ॥
कन्याकर्कटसिंहेषु तथा धनुर्वृषेषु च ।
वृश्चिकेपि तथा लग्ने शस्यते च बुधैः पुनः ॥ ९६ ॥

श्रीधरीये—

कुर्यात् पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा
मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे ।
हित्वा कर्कटकं नृयुग्मयुवती चान्येषु रिक्तातिथौ
शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मन्त्रिणा वासरे ॥ ९७ ॥

श्रीपति —

श्रवणः शङ्करपुनर्वसू निर्ऋतिभं वसुपुष्यगो मृगः ।
रविभूसुतजीववासराः कथिताः पुंसवनादिकर्मसु ॥ ९८ ॥

रत्नावल्या—

मासे तृतीयेप्यथवा द्वितीये पुन्नामधेयग्रहऋक्षचक्रे ।
अक्षीणचन्द्रे कुजभानुवारे जीवे शुभ पुंसवनादिकर्म ॥ ९९ ॥

शौनक —

व्यक्ते गर्भे तृतीये तु मासे पुंसवन भवेत् ।
गर्भे व्यक्ते तृतीये चेच्चतुर्थे मासि वा भवेत् ॥ १०० ॥

वसिष्ठ—

अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्तेऽशुभावहाः ।
एवं सम्यक्परीक्ष्यैव कुर्यात्पुंसवनक्रियाम् ॥ १०१ ॥

बृहस्पतिः—

गुरुशुक्रबुधेन्दूना द्रेष्काणादिवशाशकाः।
तेषामुदयहोराश्च पुंसवने शुभावहाः॥ १०२॥

गर्गः—

सौम्ये मृतप्रजा मन्दे मृत्युवन्ध्या च भास्करे।
सोमे दुग्धविहीना स्याच्छेषा सर्वार्थसिद्धिदाः॥ १०३॥

अत्र वचनद्वयप्रामाण्याद्विकल्पः।

केचित्तु—यदा तृतीये मासि पुंसवनं निकीर्षितं तदा सौम्यवारा एव ग्राह्याः। यदा चतुर्थे तदा पुवारा नक्षत्राणि पुंनामान्यत्र ग्राह्याणि।

तदाह वसिष्ठ —

पुंनामश्रवणं तिष्यस्वातीहस्तपुनर्वसु।
मूलं पौष्णपदं वानुराधामृगशिरोऽश्विनी॥ १०४॥

विशेषमाह श्रृङ्गोद्भये—

हस्तार्द्राविष्यमूलानि सौम्यं विष्णुपुनर्वसू।
पौष्ण पदद्वयं प्रोक्तमाषाढद्वयमेव च॥ १०५॥
श्रेष्ठानि कथितान्येव धिष्ण्यान्येकादशैव तु।
स्वातौ तथा मघापश्चरेवत्या फल्गुनीद्वये॥ १०६॥
अश्विन्याञ्चैव नक्षत्रे यदा पुंसवनं भवेत्।
नरः सम्पद्यते देवाद्यदा स्याद् गुरुतल्पगः॥ १०७॥
अन्धो दु ? सुतनुः क्रूरो नारी चेत्कुलटा भवेत्।
शेषाणि दशधान्यानि निन्दितानि विशेषतः॥ १०८॥
मीनवृश्चिककुम्भेषु चापगोसिंहकन्यकैः।
युक्ताः पुंसवनाद्येषु सुतपुत्रादिवाञ्छया॥ १०९॥
केन्द्रत्रिकोणमदनेषु शुभस्थितेषु
पापेषु षट्त्रिदशलाभगृहस्थितेषु।
जीवेन्दुभानुभृगुभूमिजमन्दिरेषु
लग्नेषु लग्नपरिशुद्धशुभांशकेषु॥ ११०॥

*अथापि चन्द्रबलावलमावश्यकमाह नृसिंहः—*

अपि पुंसवनं कार्यं दम्पत्योरनुकूलभे।
जन्मादि वर्जयेद्रात्रि चाशिकं विपदादि ९॥ १११॥

पुंसवनसीमन्तयोर्विशेषमाह गणपतिः—

द्वितीये वा तृतीये वा मासि पुंसवनं स्मृतम् ।
मासे षष्ठेऽष्टमे वाऽप्यगर्भसीमन्तकं विदुः ॥ ११२ ॥
पुनर्वसुद्वये मूले श्रवणे मृगहस्तयोः ।
गुरुभौमार्कवारेषु प्रोक्तं पुंसवनादिकम् ॥ ११३ ॥
रेवत्यां च्युत्तरेऽश्व्येके शुक्रे चन्द्रे बुधे जगुः ।
मासे शेषे बले चन्द्रे लग्ने पुंभांशके शुभे ॥ ११४ ॥
सौम्ये केन्द्रत्रिकोणे वा पापे लाभत्रिषट्कके ॥ ११५ ॥

उक्तञ्च सीमन्ताध्याये कश्यपेन—

शुक्लपक्षादिदिवसं रिक्तां पक्षस्य मध्यमाम् ।
तिथिं शन्यर्कभूसूनुगुरुज्यानाञ्च वासरे ॥ ११६ ॥

व्यासः—

पुरुषमदवाराः स्युः शुभाः सीमन्तकर्मणि ।
मध्यौ स्त्रीमदवारौ तु वर्जयेत्तु नपुंसकौ ॥ ११७ ॥

नारदः—

चतुर्थे मासि षष्ठे वाप्यष्टमे वा तदीश्वरे ।
बलोपपन्ने दम्पत्योश्चन्द्रताराबलान्विते ॥ ११८ ॥

कश्यपोपि—

मासेश्वरे बलोपेते नास्तगे न पराजिते ॥ ११९ ॥

शौनकः—

चतुर्थे गर्भमासान् स्यात्सीमन्तोन्नयनक्रिया ।
षष्ठेऽष्टमे वा कुर्वीत सूत्रान्तरविधानतः ॥ १२० ॥

सूत्रान्तरम्=स्वस्वगृह्यसूत्रम् ।

नारदः—

शुक्लपक्षे च पूर्वाह्णे सीमन्ताख्यो विधिः स्मृतः ॥ १२१ ॥

बृहस्पतिः—

पूर्वपक्षः शुभः प्रोक्तः कृष्णो चान्त्यत्रिकं विना ।
पूर्वाह्णे पर तथापि नापराह्णे कथञ्चन ॥ १२२ ॥

वसिष्ठः—

केन्द्रत्रिकोणोपगतैश्च सौम्यै-
दुश्चिक्यलाभारिगतैश्च पापैः ।
षष्ठाष्टलग्नान्त्यविवर्जितेन्दौ
सीमन्तकार्यं शुभदं तथैव ॥ १२३ ॥

रत्नमालायाम्—

षष्ठे मास्यथवाष्टमे तदधिपे वीर्योपगन्ने विधौ
चेष्टेष्टतनौ नृनामभवने पुलग्नभावेऽपि च ।
धीधर्मार्थचतुष्टये सुरगुरौ पापैश्च तद्वाह्यगै-
र्मृत्युद्वादशवर्जितैश्च मुनिभिः सीमन्तकर्म स्मृ म् ॥ १२४ ॥

अत्र वसिष्ठ —

चन्द्रोऽपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्टमव्ययान् ।
सीमन्तलग्नादेकोऽपि क्रूर षष्ठाष्टरिष्फगः ।
हन्ति सीमन्तिनीं सोऽपि तद्गर्भं वा न संशयः ॥ १२५ ॥

सीमन्ताध्याये वसिष्ठ —

न नैधने तुर्यलग्नैर्नैधने शुद्धिसंयुते ।
पञ्चभिश्च चतुर्भिर्वा सूर्येन्दुगुरुपूर्वकैः ।
ग्रहैर्दृष्टैः शुभैर्लग्ने राशावपि न नैधने ॥ १२६ ॥

सीमन्तोन्नयनमित्यनुषङ्ग , अस्यापवाद पारिजाते नृसिंह इत्युक्तः —

लग्ने दृष्टभराशीश केन्द्रग शुभवीक्षित ।
यद्यप्यष्टममस्योक्त दोषमाशु व्यपोहति ॥ १२७ ॥

गुरु —

मूलर्क्षे केचिदिच्छन्ति सीमन्त शुभद बुधाः ।
सिंहाली वर्जयेल्लग्न ग्रहाष्टमवर्जितं ॥ १२८ ॥
रोहिण्यैन्दवमादित्य पुष्यहस्तोत्तरात्रयम् ।
पौष्णवैष्णवमूलं च सीमन्तादिषु सम्मतम् ॥ १२९ ॥

श्रीधर —

सौम्यानां वारवर्गाः स्युः सीमन्तादिषु शोभनाः ॥ १३० ॥

अत जन्मनक्षत्रस्य विहितत्वसम्भवेपि त्याज्यमेवाह वशिष्ठः—

बालान्नभुक्तौ व्रतबन्धने च
राज्याभिषेके खलु जन्मधिष्ण्यम्।
शुभन्त्वनिष्टं सततं विवाह-
सीमन्तयात्रादिषु मंगलेषु ॥ १३१ ॥

एवं निर्णीते सीमन्तोन्नयनमुहूर्त्ते शुक्रास्तादिदोषविचारो नास्ति नियतमास-विहितत्वात्।

तदाह—

मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः।
न दोषकृन्मलो मासो गुर्वादित्यादिकन्तथा ॥ १३२ ॥

उक्तञ्च—

सीमन्तजातकादीनि प्राशनान्तानि यानि वै।
न दोषो मलमासस्य मौढस्य गुरुशुक्रयोः ॥ १३३ ॥

सकृदेव सीमन्तकर्मणा संस्कृतो गर्भः सर्वो गर्भः संस्कृतो भवति यदाह हारीतः—

सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ १३४ ॥

अथ विष्णुपूजा

वशिष्ठः—

मास्यष्टमे च गर्भस्य कुर्याद्विष्ण्वर्चनक्रियाम्।
श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ॥ १३५ ॥
द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः।
शुभमहोदयाः शस्तास्त्वेपाञ्च दिवसा अपि।
पापाख्यारिगाः शस्ता नेष्टाः सर्वेऽष्टमे स्थिताः ॥ १३६ ॥

श्रीधरः—

रोहिण्यां वैष्णवे पूर्वपक्षे
द्वादश्यां वा सप्तमे वा तिथौ च।
मध्ये चाह्नः पूर्वभागे न रात्रौ
विष्णोः पूजाङ्कारयेद् गर्भपुष्ट्यै ॥ १३७ ॥

अष्टमग्रहदोषापवादमाह गुरुः—

रन्ध्रेशः स्वांशगः स्वोच्चे स्वक्षेत्रोपचयर्क्षगः।
अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः ॥ १३८ ॥

नारदः—

लग्नाष्टमेशयोर्मैत्रे लग्नेशे बलसंयुते।
अस्तगे निधनेशे वा निधनेऽपि शुभग्रहे॥ १३९॥

तत्र पूजाप्रकारस्तेनैवोक्तः—

पीताम्बरं कृष्णवर्णं शङ्खचक्रगदाम्बुजम्।
वैकुण्ठवासिनं विष्णुं मृत्कुम्भे स्थापयेत्ततः॥ १४०॥
विष्णोश्च रूपं कनकेन कृत्वा तल्लिङ्गमन्त्रैरथ गन्धपुष्पैः।
वस्त्रार्चनैर्गुग्गुलुधूपदीपैर्नैवेद्यताम्बूलफलैश्च सम्यक्॥ १४१॥
विष्णुश्च देवता पूज्यो गर्भाणां रक्षणाय च।
ब्राह्मणेभ्यः प्रदातव्या प्रतिमा वस्त्रसंयुता॥ १४२॥

अथ कालविधानव्याख्यायां गर्भिणीपतिधर्ममाह—

क्षौरं शवानुगमनं नखकृन्तनञ्च
युद्धन्तु वास्तुकरणन्त्वतिदूरयानम्।
उद्वाहमौपनयनं पयसोपगाह-
मायुःक्षयो भवति गर्भिणिकापतीनाम्॥ १४३॥

गालवः—

दहनं वपनं चैव चौलञ्च गिरिरोहणम्।
नावमारोहणञ्चैव न कुर्याद् गर्भिणीपतिः॥ १४४॥
प्रव्यक्तगर्भापतिरध्वयानं
मृतस्य वाहं क्षुरकर्म संगरम्।
तस्यान्तु यत्नेन गयादितीर्थं
यागादिकं वास्तुविधिं न कुर्यात्॥ १४५॥
प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात्परम्।
षण्मासात् परतः सूतिर्नवमेऽरिष्टवासिनी॥ १४६॥

धर्मशास्त्रे—

सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम्।
विदेशगमनञ्चैव न कुर्याद् गर्भिणीपतिः॥ १४७॥
राजा योगी पुरन्ध्री च मातापित्रोस्तु जीवतोः।
मुण्डनं सर्वतीर्थेषु न कुर्याद्गर्भिणीपतिः॥ १४८॥

नारदः—

वपनं मैथुनं तीर्थं वर्जयेद् गर्भिणीपतिः।
श्राद्धञ्च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित्॥ १४९॥

आर्द्रं = आर्द्रमोचनम्।

## अथ सूतीगृहनिर्माणप्रवेशौ

तत्र वराहः —

हस्तादित्यशशाङ्कविष्णुपवनप्राग्भीशमित्रोत्तरा
चित्राश्विश्रवणेषु वृश्चिकघटौ हित्वा विरिक्ते तिथौ ।
शुक्राचार्यशनैश्चरैश्च शशिना वारानुकूले शुभे
राशौ वेश्मनि सूतिकागृहविधिः क्षेमङ्करः कीर्त्तितः ॥ १५० ॥

गर्गः —

वारेऽनुकूले राशौ च दिने दोषविवर्जिते ।
सानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥ १५१ ॥

तथा—

रोहिण्यैन्दवपौष्णेषु स्वातीवारुणयोरपि ।
पुनर्वसुपुष्यहस्तं धनिष्ठास्वुत्तरासु च ।
मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् ॥ १५२ ॥

## अथ जातकर्म—

अथ पुत्रे जाते पितुः स्नानं ततः आभ्युदयिकपूर्वकं शास्त्रोक्तप्रकारेण जातकर्म तथाचारात्पुत्रे जाते षष्ठदिने रात्रौ षष्ठिकापूजा । तत्र गौरीपद्मेत्यादिषोडश-मातृकापूजा विधेया । तत्र हि—

शिवासम्भूतिनाम्नी च प्रीतिमन्नौविरेव च ।
अनसूया क्षमा चैव षडेताः कृत्तिकाः स्मृताः ॥ १५३ ॥

कृत्तिकापूजानन्तरं षष्ठिकापूजा विधेया । तत्र मन्त्रः —

गौर्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया ।
तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके मम ॥ १५४ ॥

वशिष्ठः—

यस्मिन् मुहूर्ते जनितः कुमार-
स्तस्मिन् मुहूर्ते खलु जातकर्म ।
सन्तर्प्य देवान् सपितॄन्द्विजांश्च
सुवर्णगोभूमिहिरण्यवस्त्रैः ॥ १५५ ॥

विष्णुः —

जातकर्म ततः कुर्यात् पुत्रे जाते यथोदिते ॥ १५६ ॥

स्वस्वगृह्यानुसारेणैव्यं । तच्च श्रवणानन्तरं सचैलं स्नानं विधाय कार्यम् ।

उक्तञ्च वशिष्ठेन—

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।
उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥ २५७ ॥

तदपि नालच्छेदात्प्रागेव तदुक्तं मनुना—

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ॥ २५८ ॥

वर्धनं छेदनम् । अत्र हेतुमाह जैमिनिः—

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते ॥ २५९ ॥

अत्र गर्गः—

व्यतीपाते च सङ्क्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं कर्म प्राप्तकालेऽपि नाचरेत् ॥ २६० ॥

अन्यच्च—

अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् ॥ २६१ ॥

नारदसंहितायां—

तस्मिन् जन्ममुहूर्ते तु सूतकान्ते तथा शिशोः ।
जातकर्म च कर्तव्यं पितृपूजनपूर्वकम् ॥ २६२ ॥

श्रीपतिः—

मृदुध्रुवक्षिप्रचरेषु भेषु
सूनोर्विधेयं खलु जातकर्म ।
गुरौ भृगौ वापि चतुष्टयस्थे
सन्तः प्रशंसन्ति च नामधेयम् ॥ २६३ ॥

मृद्वादिलक्षणमुक्तं श्रीधरेण—

रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगं दारुणं
क्षिप्रं चाश्विदिनेशपुष्यमनलेन्द्राग्नी तु साधारणम् ।
उग्रं पूर्वमघान्तकं मृदुमगस्त्वाष्ट्रान्त्यमैत्र्यक्षरं
विष्णुस्वातिशतोभवस्त्वदितयः कुर्युः स्वसंज्ञाफलम् ॥ २६४ ॥

उक्तकालातीतेन्दर्शनात्परं तत्र यथोदिते शुभसमये जातकर्म कार्यम् । उक्तकाले तु न पञ्चाङ्गं विचारणीयमिति तात्पर्यं ।

अथ नामकर्म

नारद —

सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ॥ २६५ ॥

नक्षत्रादिनियमाभावं नियतकालविहितत्वात् ।

तदुक्तं सारसङ्ग्रहे—

एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे ।
वैश्यानां षोडशे नाम मासान्ते शूद्रजन्मनः ॥ १६६ ॥

मनु —

नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ १६७ ॥'

दशम्यामतीतायामेकादशे दिवस इत्यर्थं । एतच्च ब्राह्मणविषय पूर्ववाक्य-स्वरसात् । ।

कश्यप —

उक्तकाले प्रकर्त्तव्या नामकर्माखिला क्रिया ।
अतीतेषु च कालेषु कर्तव्याचात्तरायणे ॥ १६८ ॥

सुरेज्ये वाऽसुरेज्ये वा नास्तगे न च वार्द्धके ।
शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे ॥ १६९ ॥

चन्द्रताराबलोपेते नैधनोदयवर्जिते ।
पूर्वाह्णे क्षिप्रनक्षत्रे चरस्थिरमृदूडुषु ॥ १७० ॥

नाममङ्गलघोषैश्च रहस्य दक्षिणे श्रुतौ ।

बृहस्पति —

पूर्वाह्णं श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिश्च वर्जयेन्नामकर्मणि ॥ १७१ ॥

गुरु —

पक्षच्छिद्राश्च नवमीं हित्वा पञ्चदशीं तथा ।
शेषाः स्युस्तिथयः सर्वा नामकर्मणि पूजिताः ॥ १७२ ॥

भास्करार्कनभौमाना वर्जयेद्दशकोदयौ ।
धनकर्मसुतभ्रातृनवमस्थ शुभं शशी ॥ १७३ ॥

शुद्धे व्ययाष्टमे लग्ने पापाश्च त्र्यरिलाभगाः ।
शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥ १७४ ॥

नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥ १७५ ॥

गृह्यपरिशिष्टे—

तदक्षरादिकं नाम यस्मिन्धिष्ण्ये यदक्षरम् ॥ १७६ ॥

तच्च नाम कीदृश कार्यमित्याह—

वशिष्ठ —

न द्व्यक्षर वा चतुरक्षरं वा
यदप्सितं घान्तणकाररेफम् ।
विवर्ज्य नामादिकमेव कार्यं
स्फुटम्भवेद्दक्षिणकर्णरन्ध्रे ॥ १७७ ॥

शास —

कुलदेवतानक्षत्रादिमासम्बन्ध पिता वा कुर्यादन्योपि वा कुलवृद्धः । युग्मा-
न्यक्षराणि पुन्नामधेयानि अयुग्मानि स्त्रीनामधेयानि । नक्षत्रचरणवशात् ।

अथ मार्गशीर्षादिनामानि पिता दद्यात् ।

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ १७८ ॥

श्रीधरीये—

नामकर्म दशमेऽपि वाऽहनि द्वादशे शुचिषु वा विधीयते ।
स्वोच्चमित्रभवगैस्तु सद् ग्रहैस्ताहशैर्यदि विलोकिता शुभा ॥ १७९ ॥
मित्रादित्यमघोत्तराशतभिषास्वातीधनिष्ठान्युव-
प्रादेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ।
छिद्रा पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गवे
ज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः ॥ १८० ॥

अथ प्रसङ्गाज्जन्मसमयेऽशुभशान्त्यर्थं गण्डान्तादि तत्फलानि च कथ्यन्ते ।
तिथ्यादिगण्डान्ता —

श्रीधरीये—

पूर्णातिथीना तिसृणान्तथान्ते
मीनालिकर्क्या नवमो नवांशः ।
मेषेऽथ कण्ठीरवधन्विनोश्च
गण्डान्तमाद्यो नवमस्तथान्तः ॥ १८१ ॥

| | |
|---|---|
| अश्विनीमघमूलादौ | त्रिवेदनवनाडिकाः । |
| रेवतीसर्पशक्रान्ते | मासरुद्ररसास्तथा ॥ १८२ ॥ |
| अश्विनीमघमूलादौ | नाडिकाद्वितयन्तथा । |
| रेवतीसर्पशक्रान्ते | नाडिकाद्वितयन्तथा ॥ १८३ ॥ |

अश्विनीमघमूलानाम्पूर्वार्धे बाध्यते पिता ।
पुष्याहिशक्रपश्चार्धे जननी बाध्यते शिशोः ॥ १८४ ॥
पितृघ्नस्तु दिवा जातो रात्रिजातश्च मातृहा ।
आत्मघुक् सन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥ १८५ ॥
सर्वेषां गण्डजातानां परित्यागो विधीयते ।
वर्जयेद्दर्शनं शास्त्रं तच्च षाण्मासिकम्भवेत् ॥ १८६ ॥
मध्ये पूर्णानन्दयोर्नाडिके द्वे
स्याद्गण्डान्तं कीटभान्तस्तथैका ।
कोदण्डादौ वृश्चिकान्ते झषान्ते
मेषादौ स्यात्सर्वकार्येषु नेष्टम् ॥ १८७ ॥

एषां गण्डान्तानां फलम्—

तिथ्यक्षगण्डे पितृमातृनाशो
लग्ने तु सन्धौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति वंशं
जीवन्पुनः स्याद्बहुवारणाश्व ॥ १८८ ॥

अत्रैषां दानम् । उत्तरगार्ग्ये —

तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते ।
काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥ १८९ ॥
उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते ।
अजाप्रदानं त्वाष्ट्रे स्यात्पूर्वाषाढे च काञ्चनम् ॥ १९० ॥
उत्तरात्रित्यचित्रासु पूर्वाषाढोद्भवस्य च ।
कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजां बुधः ॥ १९१ ॥

नारदीये—

अश्विनीमघमूलादौ त्रिवेदनवनाडिकाः ।
रेवतीसर्पशक्रान्ते मासरुद्ररसास्तथा ॥ १९२ ॥
मूलेन्द्रयोर्दिवागण्ड निशास्य पितृसर्पयोः ।
अश्विनी रेवती चैव सन्ध्यागण्डः प्रकीर्तितः ॥ १९३ ॥
पौष्णाश्विन्योः सर्पपित्र्यर्क्षयोश्च
यच्च ज्येष्ठामूलयोरन्तरालम् ।
तद्गण्डान्तं यच्च तन्नाडिके हि
यात्रा जन्मोद्वाहकालेषु नेष्टम् ॥ १९४ ॥
अश्विनीमघमूलादौ गण्डनाडीद्वयम्भवेत् ।
रेवतीसर्पशक्रान्ते गण्ड नाडीद्वयं तथा ॥ १९५ ॥

अश्विनीमघमूलानां पूर्वार्धे पीड्यते पिता ।
पौष्णाद्दिशक्रशेषार्द्धे जननीमरणं दिशेत् ॥ १९६ ॥

गण्डान्तशान्तिं वक्ष्यामि सोममन्त्रेण भक्तिमान् ।
कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्बुधः ॥ १९७ ॥

अष्टाभिर्वा चतुर्भिर्वा द्वाभ्यां वा शोभनं समम् ।
तन्मध्ये स्थापयेच्छद्धं नवनीतेन पूरितम् ॥ १९८ ॥

राजतं चन्द्रमभ्यर्च्य सितपुष्पैः सहस्रकैः ।
दैवज्ञः सोपवासश्च शुक्लाम्बरधरः शुचिः ॥ १९९ ॥
सोमोऽहमिति संचिंत्य कुर्यात्पूजामतन्द्रितः ।
जपेत्साहस्रिकं जप्यं श्रद्धानः समाहितः ॥ २०० ॥

दद्याद्वै दक्षिणामिष्टां गण्डदोषोपशान्तये ।
शुक्लं वागीश्वरञ्चैव ताम्रपात्रे समाहितः ॥ २०१ ॥

गण्डदोषोपशान्त्यर्थं दद्याद्वेदविदे शुचि ।
यथा सर्पविषं घोरं मन्त्रस्मरणतो नहि ॥
गण्डदोषोद्भवं तद्वत् विघ्नैरस्माद्विलीयते ॥ २०२ ॥

ॐ अमृतात्मने सोमाय नमः । इति मन्त्रः ।

अन्यच्च—

शुद्धश्चामीकरं दद्यात्ताम्रपात्रं तिलान्वितम् ।
गण्डदोषोपशान्त्यर्थं यजुर्वेदविदे शुचिः ॥ २०३ ॥
कुंकुमं चन्दनं कुष्ठं गोरोचनमथापि च ।
घृतैरेयान्वितं कार्यं चतुर्भिः कलशैर्बुधः ॥ २०४ ॥

सहस्राक्षेण मन्त्रेण बालकं स्थापयेच्च तम् ।
पितृयुक्तं दिवाजातं मातृयुक्तं न रात्रिजम् ॥ २०५ ॥
स्नापयेत्पितृमातृभ्यां सन्ध्ययोरुभयोरपि ।
कांस्यपात्रं घृतैः पूर्णं गण्डदोषोपशान्तये ॥ २०६ ॥

दद्याद्धेनुं हिरण्यञ्च महाश्चापि प्रपूजयेत् ।
गर्गो दूषयते पादं तदर्धं देवलो वदेत् ॥
वराहमिहिराद्यास्तु शेषाद्य तुर्यनाडिकम् ॥ २०७ ॥

सर्वेषां गण्डमूलजातानां त्यागः । यदि त्यागो न क्रियते तदा शान्तिः कार्या ।

दिवा जाता च या कन्या निशि जातश्च यः सुतः ।
नैतयोर्गण्डदोषोऽस्ति न फलं हन्तु पूर्वकम् ॥ २०८ ॥

अथ ज्येष्ठानक्षत्रजातस्य फलम् ।

ब्रह्मयामले—

ज्येष्ठादौ स्वीयजननी द्वितीये जननीपिता ।
तृतीये जननीभ्राता स्वयं भ्राता चतुर्थके ॥ २०९ ॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ॥
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ २१० ॥

अथ मूलफलम् ।

ग्रन्थः—

अभुक्तमूलसम्भवं परित्यजेच्च बालकम् ।
समाष्टकं पिता तथा न तन्मुखं विलोकयेत् ॥ २११ ॥
तदाद्यपादके पिता विपद्यते जनन्यथ ।
तृतीयके धनान्यथ चतुर्थके शुभावहः ॥ २१२ ॥
प्रतीपमन्त्यपादतः फलन्तदेव सार्पभे ।
तदुक्तदोषशान्तये विधेयमत्र शान्तिकम् ॥ २१३ ॥

अभुक्तमूलस्य लक्षणं वशिष्ठसंहितायाम्—

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुर्जातन्तत्रैव वर्जयेत् ॥ २१४ ॥

केचिदन्यथाहुः—

भुजङ्गपौरन्दरपौष्णमाना तदग्रभानाञ्च यदन्तरालम् ।
अभुक्तसंज्ञं प्रहरप्रमाणं त्यजेत्सुतं तत्प्रभवां सुतां च ॥ २१५ ॥

अथ वृक्षो यथार्णवे—

मूलस्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा ।
वेदाश्च मुनयश्चैव दिशश्च वसवस्तथा ॥ २१६ ॥
नन्दा बाणरसा रुद्रा मूलभेदः प्रकीर्त्तितः ।
मूले मूलविनाशाय स्तम्भे हानिर्धनक्षयः ॥ २१७ ॥
त्वचि भ्रातृविनाशः स्याच्छाखा मातुर्विनाशकृत् ।
पत्रे सपरिवारः स्यात्पुष्पेषु नृपवल्लभः ।
फलेषु लभते राज्यं शिखायामल्पजीवितम् ॥ २१८ ॥

अथ मूलपुरुषः

मृगाङ्कलग्ने—

मूलर्क्षघटिकाषष्टिरेवं स्थाप्या नराकृतौ ।
मस्तके घटिकाः पञ्च वक्त्रे पञ्च प्रकीर्त्तिताः ।

स्कन्धे चत्वारि चत्वारि भुजयोरष्टकं तथा ॥ २१९ ॥
एवैकं हस्तयोर्न्यस्य हृदये चाष्टक पुनः।
द्वितीयं दिशते नाभौ गुह्ये च दशकन्तथा ॥ २२० ॥
रससङ्ख्याश्च जान्वोश्च पादयोश्च षडेव हि।
पुरुषस्याकृतौ न्यस्य मूलर्क्षस्य फलं वदेत् ॥ २२१ ॥
मस्तके धार्यते छत्रं मुखे च पितृघातकः।
स्कन्धे स्कन्धवहो बालो भुजयोरसुरो भवेत् ॥ २२२ ॥
ब्रह्महत्याकरः पाणौ यद्वा मातुलघातकः।
हृदये राज्यलाभाय नाभौ नित्यं न जीवति ॥ २२३ ॥
गुह्ये बालः तथा जातौ वृद्धत्वे स सुखावहः।
जयायाम्भ्रामको बालो पादे जातो न जीवति ॥ २२४ ॥

मुनियुगवसुबाणानन्दपद्बाणरुद्रै-
रहनि च निशि जातो ह्यष्टधा याति मूले।
पितृधनसहजानां नाशकर्ता विरक्तो
भवति नृपतिमन्त्री भूतिमान्दीर्घजीवी ॥ २२५ ॥

अथ मूलवासः—

वृषालिसिंहेषु घटे च मूलं
दिवि स्थितं युग्मतुलाङ्गनान्त्ये।
पातालगं मेषधनुःकुलीर-
नक्रेषु मर्त्ये वसति स्मरन्ति ॥ २२६ ॥

स्वर्गे मूले भवेद्राज्यं पाताले च धनागमः।
मर्त्यलोके यदा मूलं तदा शून्यं समादिशेत् ॥ २२७ ॥

चरणफलमुक्तं ब्रह्मपुराणे—

मूलाद्यंशे पितुर्नाशो द्वितीये मातुरेव च।
तृतीये धनधान्यादिनाशस्तुर्ये धनागमः ॥ २२८ ॥

कश्यपः—

मूलाद्यपादजो हन्ति पितरन्तु द्वितीयजः।
मातरं स्वां तृतीयेऽर्थं सुहृदर्थं तुरीयजः ॥ २२९ ॥

यतो मातृशब्दः सपत्नीमातुरपि वाचकः। यदाह गौतमः—
पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तदपत्यानि मातुलेयानीति।
अतः स्वार्थमेव कश्यपवाक्ये स्वामितिपदोपादानम्।

विशेषो वशिष्ठसंहितायाम्—

मूलाद्यपादो दिवसे यदि स्या
 त्तज्जः पितुर्नाशनकारणं स्यात्।
द्वितीयपादो यदि रात्रिभागे
 तदुद्भवो मातृविनाशकः स्यात्॥ २३०॥
मूलाद्यपादो यदि रात्रिभागे
 तदात्मनो नास्ति पितुर्विनाशः।
द्वितीयपादो दिनगो यदि स्या
 न्न मातुरल्पोऽपि तदास्ति दोषः॥ २३१॥

नारदः—

वत्सरानन्तरं हन्ति मातरन्तु त्रिवर्षतः।
युग्मं वर्षद्वयेनैव श्वशुरं नव वर्षतः॥ २३२॥
जातबालो वत्सरेण वर्षैः पञ्चभिरग्रजम्।
स्यालकं चाष्टभिर्वर्षैरनुजान् हन्ति सप्तभिः॥
तस्माच्छान्तिम्प्रकुर्वीत प्रयत्नाद्विधिपूर्वकम्॥ २३३॥

युग्मं धनम्। अत्र कस्मिन्काले शान्तिरित्येतद्विषये वशिष्ठोक्तौ कालत्रयकथनं सामर्थ्यासामर्थ्यकृतेऽवधेयम्। यदि मातुः शौचस्नानेदकस्नाने सामर्थ्यं स्यात्तदा सूतकान्ते, तत्राप्यशक्तौ तृतीये मासि, दीर्घरोगादिना तत्राप्यशक्तिश्चेत्तर्हि वर्षसमाप्तिदिवसे शान्तिः। मातृगण्डे तु विशेषस्तेनैवोक्त—

मातृगण्डे सुते जाते सूतकान्ते विचक्षणः।
कुर्याच्छान्तिं तदन्ते वा तद्दोषस्यापनुत्तये॥ २३४॥

यस्मिन्नक्षत्रे जन्म तन्नक्षत्र एव शान्तिरिति शिष्टाचारः। शौनकः—

अथातः सम्प्रवक्ष्यामि मूलजातहिताय च।
मातापित्रोर्धनस्याय कुले शान्तिहिताय च॥ २३५॥
त्यागो वा मूलजातस्य स्याददृष्टा दारप्रदर्शनम्।
अभुक्तमूलजातानां परित्यागो विधीयते॥ २३६॥
अदर्शनेऽपि वा पितुः स तु विप्रैस्समाष्टकम्।
एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैः॥ २३७॥
मुख्यकालं प्रवक्ष्यामि शान्तिमस्य प्रयत्नतः।
जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने॥ २३८॥
समाष्टके वा मतिमान् कुर्याद् वा शान्तिमादरात्।
यदैव शान्तिकं कुर्यात् कर्म तच्च प्रवक्ष्यहम्॥
सुसमे पुण्यदेशे तु मण्डपं कारयेद् बुधः। २३९॥

मण्डपपरिमाणं वशिष्ठेनोक्तम्—

ऐशान्यामथवा प्राच्यामुदीच्यान्दिशि कल्पयेत् ।
मण्डपं सप्तभिर्हस्तैश्चतुर्भिर्वा समन्ततः ॥ २४० ॥

चतुर्द्वारसमायुक्तं तोरणाद्यैरलङ्कृतम् ।
वितानं कल्पयेत्सर्वं तथा गोमयमण्डने ॥
कुण्डञ्च तद्बहिः कुर्याद् मद्वचनोक्तमार्गतः ॥ २४१ ॥

पुनः शौनकः—

पुण्यभिर्मन्त्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः ।
तत्रोदकुम्भं सुलक्षणं रक्तं व्रणविवर्जितम् ॥ २४२ ॥
अकृष्णमलनिर्मुक्तं पूरयेन्निर्मलाम्भसा ।
वस्त्रावगुण्ठितं कुर्यात् पूरयेत्तीर्थवारिणा ॥ २४३ ॥

कूर्चहेमसमायुक्तं चूतपल्लवसंयुतम् ।
स्वस्तिकोपरि विन्यस्य क्षीरद्रुमसुपल्लवैः ॥ २४४ ॥

द्रोणव्रीहींश्च निःक्षिप्य ऐशाने च निधापयेत् ।
पञ्चरत्नानि निःक्षिप्य सर्वौषधिसमन्वितम् ॥ २४५ ॥

अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं स्थापयेत्ततः ।
तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककम् ॥ २४६ ॥
रक्षामन्त्रं तथा पुण्यं रक्षोघ्नं च स्पृशञ्जपेत् ।
त्र्यम्बकञ्च जपेत् सम्यगष्टोत्तरसहस्रकम् ॥ २४७ ॥

एकैकवारं जापी च पावमानीं स्पृशञ्जपेत् ।
जपस्य पंचकुम्भांश्च द्वयं वा तदलाभतः ॥ २४८ ॥
श्रीरुद्रस्यैककुम्भञ्च सर्वसूक्तानि तत्र च ।
तथाऽन्यं पञ्चमं कुम्भं पूर्वोक्तैर्लक्षणैर्युतम् ॥ २४९ ॥

चतुष्प्रस्रवणं कुर्यात् पञ्चवक्त्रञ्च तद्भवेत् ।
वस्त्रावगुण्ठितं कुर्यात् पूरयेत् तीर्थवारिणा ॥ २५० ॥
पञ्चरत्नसमायुक्तमाम्रपल्लवसंयुतम् ।
गजाश्वरथ्यावल्मीकसंगमाद् ह्रदगोकुलात् ॥ २५१ ॥

राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत् ।
कुम्भस्य नैरृते देशे होमदेशं प्रकल्पयेत् ॥ २५२ ॥
गोमयैर्लेपिते देशे कुर्यात् स्थण्डिलमुत्तमम् ।
कृत्वाग्निमुखपर्यन्तमुल्लेखादिस्वशाखतः ॥ २५३ ॥

पूर्णपात्रनिधानान्तं कृत्वा पूजां समारभेत् ।
नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः ॥ २५४ ॥
निष्कमानेन चार्धेन पादेनापि स्वशक्तितः ।
प्रतिमा लक्षणैर्युक्तां कारयित्वा विचक्षणः ॥ २५५ ॥
यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ।
सुवर्णं सर्वदैवत्यं सर्वदेवात्मकोऽनलः ॥ २५६ ॥
सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः ।
संस्मरेन्निरृतिं श्यामं मुसुलं नरवाहनम् ॥ २५७ ॥
रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितम् ।
प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् ॥ २५८ ॥
पङ्कजं कारयेद् भूमौ रक्ताभैर्व्रीहितण्डुलैः ।
चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितम् ॥ २५९ ॥
तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयम् ।
शुद्धवस्त्रेण संच्छाद्य तत्र मूलानि निःक्षिपेत् ॥ २६० ॥
मूलानि शतमूलानि तदलाभे विशेषतः ।
स्थापयेत्कर्णिकामध्ये वस्त्रगन्धाद्यलङ्कृतम् ॥ २६१ ॥
कूर्चहेमजलोपेतं कुंकुमौषधिसंयुतम् ।
कुम्भोपरि न्यसेद्विद्वान् मूलनक्षत्रदैवतम् ॥ २६२ ॥
अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ।
अधिदेवं जपेदादौ ज्येष्ठानक्षत्रदैवतम् ॥ २६३ ॥
पूर्वाषाढाजलमुत्तराषाढाविश्वेदेवाः ।
विष्णुर्वसवो वरुणोऽजैकपादहिर्बुध्न्यः ॥ २६४ ॥
पूषाश्विनौ यमोऽग्निः प्रजापतिस्सोमो रुद्रादितिः ।
बृहस्पतिः सर्पः पितरो भगार्यमा सविता त्वष्टा ॥ २६५ ॥
वायुरिन्द्राग्नी मित्र इत्याद्यनुराधान्तमर्चयेत् ।
ऐन्द्रादीशानपर्यन्तं पूजयेत् स्वस्वनामतः ।
स्वलिङ्गोक्तैश्च मन्त्रैश्च प्रधानादीन् प्रपूजयेत् ॥ २६६ ॥
पञ्चामृतेन संस्नाप्य आवाह्याय समर्चयेत् ।
उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ॥ २६७ ॥
रक्तचन्दनगन्धाद्यैः पुष्पैः कृष्णासितादिभिः ।
नैरऋंगादिरूपैश्च घृतदीपैस्तथैव च ॥ २६८ ॥
सुरापीलिकमांसाद्यैर्नैवेद्यैर्भोजनादिभिः ।
मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् ॥ २६९ ॥

सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम्।
पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत्॥ २७०॥
रक्तगन्धाद्यलाभे तु यथालाभं समर्पयेत्।
पुष्पान्तञ्च समभ्यर्च्य होमं कुर्याद्यथोदितम्॥ २७१॥
निर्वापप्रोक्षणादीनि चरोः कुर्याद् यथाविधि।
हविर्गृहीत्वा विधिवन्नैर्ऋत्ये च स्रुचा हुनेत्॥ २७२॥
मोषुणः परापरेति यत्ते देवेति वा पुनः।
पायसं घृतसमिश्रं हुनेदष्टोत्तरं शतम्॥ २७३॥
समिदाज्यचरून्पश्चाच्छक्तितः संख्यया हुनेत्।
अधिदैवतयोश्चैव जुहुयात् स्वस्वमन्त्रतः॥ २७४॥
चतुर्थ्यन्तैर्नमोन्तैश्च स्वाहान्तैः स्वस्वमन्त्रकैः।
नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत्॥ २७५॥
कृणुष्वेति पञ्चदशभिर्जुहुयात् कृसरन्ततः।
गायत्र्या जातवेदेति त्रियम्बकमिति क्रमात्॥ २७६॥
सोरायुजन्तिवामग्निं वास्तोष्पत्यग्निमेव च।
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गादेवीं शरणमहं प्रपद्ये सुतरसितरसे नमः।
क्षेत्रस्य पतिना गृह्णाम्यग्निं दूतं तथैव च॥ २७७॥
श्रीसूक्तेन तथा विद्वान् समिदाज्यचरून् क्रमात्।
अष्टोत्तरशतैर्वापि अष्टाविंशतिभिः क्रमात्॥ २७८॥
अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः।
त्वन्नः सोमेन पायसं जुहुयाच्च त्रयोदश॥ २७९॥
चतुर्गृहीतमाज्यञ्च या ते रुद्रेति मन्त्रतः।
स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात्॥ २८०॥
हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत्।
आचार्यो यजमानो वा वह्नौ पूर्णाहुतीर्हुनेत्॥ २८१॥
होमशेषं समाप्याथ वह्निमारोपयेद् बुधः।
कुम्भाभिमन्त्रणं कुर्याद्त्रिणेनाभिमन्त्रयेत्॥ २८२॥
मृत्युप्रशमनार्थाय जपेत् त्रैयम्बकं शतम्।
रुद्रकुम्भोक्तमार्गेण रुद्रमन्त्रं स्पृशञ्जपेत्॥ २८३॥
धूपं दीपञ्च नैवेद्यं कुम्भयुग्मे निवेदयेत्।
प्रसादयेत् ततो देवमभिषेकार्थमादरात्॥ २८४॥

तस्मिन् काले महातिथ्यं कर्त्तव्यं भूतिमिच्छता।
पृथक् प्रशस्त तच्चैव नक्षत्रेष्ट्या सहैव च ॥ २८५ ॥
अभिषेकविधि वक्ष्ये सर्वाचार्यैरुदीरितम्।
भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः ॥ २८६ ॥

दारपुत्रसमेतस्य कुर्युस्तस्याभिषेचनम् ।
अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥ २८७ ॥
आपो हिष्ठेति नवभिराप इद्वा इयेन च।
सहस्राक्षत्र्यचेनापि देवस्य त्वेति मन्त्रकैः ॥ २८८ ॥
शिवसकल्पमन्त्रेण वक्ष्यमाणैश्च मन्त्रकैः।
योऽसौ वज्रधरा देवो महेन्द्रा गजवाहनः ॥ २८९ ॥

मूलजातशिशोर्दोप मातापित्रोर्व्यपोहतु ।
योऽसौ शक्तिधरो देवो हुतभुङ् मेषवाहन ॥ २९० ॥
सप्तजिह्वश्च देवोऽग्निर्मूलदोष व्यपोहतु।
योऽसौ दण्डधरो देवो धर्मो महिषवाहनः ॥ २९१ ॥
मूलजातशिशोर्दोप व्यपोहतु यमो मम।
योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ॥ २९२ ॥

प्रशामयतु मूलोत्थदोष गण्डान्तसम्भवम्।
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ॥ २९३ ॥
नक्रवाहः प्रचेताहो मूलोत्थाघ व्यपोहतु।
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ॥ २९४ ॥

मातापित्रोः शिशोश्चैव मूलदोप व्यपोहतु।
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ॥ २९५ ॥
आश्लेषामूलगण्डान्तदोपमाशु व्यपोहतु।
विघ्नेश क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ॥ २९६ ॥
सर्वदोषप्रशमन सर्वे ते शान्तिदायकाः।
तच्छिशोरभिषेकन्तु सर्वदोषोपशान्तिदम् ॥ २९७ ॥
सर्वकामप्रदं दिव्य मगलानाञ्च मगलम्।
यज्ञान्तरितकुम्भाभ्या पश्चात्त स्नापयेत्ततः ॥ २९८ ॥
तत शुक्लाम्बरधर शुक्लमाल्यानुलेपनः।
यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ॥ २९९ ॥
धेनुम्पयस्विनीन्दद्यादाचार्याय सवत्सकाम् ।
निर्ऋतिविप्रविमा वस्त्र कुम्भ हेम च दापयेत् ॥ ३०० ॥

श्रीरुद्रजापिने देय कृष्णोऽनडुवा प्रयत्नत ।
तत्कुम्भवरुणप्रतिमास्तस्मै दद्यात् प्रयत्नत ॥ ३०१ ॥
इतरेभ्योऽपि विप्रेभ्य शक्त्या दद्याच्च दक्षिणाम् ।
तत्ताभावे तया दद्यादाचार्यमाज्ञयान्विजाम् ॥ ३०२ ॥
तत्तन्मूल्यं प्रदातव्य शक्त्या वापि प्रदापयन् ।
आचार्याय च यद्दत्त तदर्धं ब्रह्मणे भवेत् ॥ ३०३ ॥
सदस्याय ब्रह्मगोर्धमृत्विग्भ्यश्च तदर्धकम् ।
आशीश्च तेभ्यो गृह्णीयात् प्रणम्याय क्षमापयेत् ॥ ३०४ ॥
दद्यादन्न पायसादि ब्राह्मणान् भोजयच्छतम् ।
अलाभे सति पञ्चाशद् दशक तदभावत ॥ ३०५ ॥
सर्वशान्तेश्च पठन ब्राह्मणैराशिषस्तथा ।
गृही क्षमापयेद्विद्वान्निर्ऋ ति प्रीयतामिति ॥ ३०६ ॥
विधाने चरितेऽस्मिस्तु तत शान्तिर्भवेद् ध्रुवम् ।
गण्डान्तेऽपि तथा कार्यं पुण्यार्थे तद्वदेव तु ॥ ३०७ ॥
समाष्टके द्वादशाहे कुर्याद्वा शान्तिमादरात् ।
इत्युक्त मनुना सम्यङ् मूलजातहिताय च ।
मातापित्रोर्धनस्यापि वन्धो शाकोपशान्तये ॥ ३०८ ॥

शतौषधय —गमारिमूल, श्वेतापराजिता, वाला, पाठी, शतपुष्पी, अधःपुष्पी, मधुयष्टिका, चक्राष्टिका, मयूरशिखा, काकजघा, कुमारीद्वय, जीवन्ती, अपामार्ग, भृङ्गराज, लक्ष्मणा, जाती, व्याघ्रदन्त, चक्रमर्द, विश्वेश्वर, अश्वत्थ, उदुम्बर, पलाश, प्लक्ष, वट, अर्क, दूर्वा, रोहतक, शमी, शतावरी, एवमादीनि मूलानि यथालाभम् येषामपि निविद्वानां मूलान्यानीय शत पूरयेत् ।

इति शौनकोक्तमूलशान्ति ।

अथ आश्लेषानक्षत्रशान्ति

मानवसंहितायाम्—

आश्लेषायान्तु जाताना शान्ति वक्ष्याम्यशेषत ।
जातस्य द्वादशाहे च शान्तिहोम समाचरेत् ॥ ३०९ ॥
असम्भवे तु जन्मर्क्षे चान्यस्मिन् वा शुभे दिने ।
स्नातोऽभ्यङ्गादिभिस्त्वस्मिन् वरयत्तु द्विजोत्तमान् ॥ ३१० ॥
विभवे पञ्चकुम्भास्तु द्वय वा तदलाभत ।
देवतास्थापने चैकमेक रुद्राभिमन्त्रणे ॥ ३११ ॥
मूलर्क्षोक्तप्रकारेण कुम्भ निक्षिप्य पूजयेत् ।
गोमयालिप्ते देशे धान्याद्यै परिशोभिते ॥ ३१२ ॥

पङ्कजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् ।
तण्डुलैः कारयेद्वा रक्तपीतसितासितैः ॥ ३१३ ॥
कर्णिकाया न्यसेद् व्रीहीन्स्थापयेत्तेषु कुम्भकम् ।
आकलशेष्वित्यनया कलशस्थापनं शुभम् ॥ ३१४ ॥
इमं मे चेति मन्त्रेण पूरयेत्तीर्थवारिणा ।
कुम्भञ्च गन्धपुष्पाद्यैस्तत्तन्मन्त्रैः प्रपूजयेत् ॥ ३१५ ॥
याः फलिनीरित्यनया क्षिपेत्फलौषधादिकान् ।
कुम्भोपरिस्थपात्रे तु चाश्लेषाप्रतिमां यजेत् ॥ ३१६ ॥
निष्कनिष्कार्धपादैर्वा कारयित्वा स्वशक्तितः ।
तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् ॥ ३१७ ॥
ऐन्द्रादीशानपर्यन्तमितरर्क्षाणि पूजयेत् ।
मूलोक्तेन विधानेन कुम्भयोरभिमन्त्रणम् ॥ ३१८ ॥
रुद्राख्यं रुद्रकुम्भे तु पूर्ववच्छेषमर्चयेत् ।
नमोस्तु सर्पेभ्य इति पूजामन्त्र इहोदितः ॥ ३१९ ॥
सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः ।
फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ ३२० ॥
एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समाचरेत् ।
कर्तुः शाखोक्तमार्गेण आचार्यस्याथवाचरेत् ॥ ३२१ ॥
मुखान्तं कर्म निर्माय हविरादाय शास्त्रतः ।
इदं सर्पेभ्यो जुहुयात्साधिप्रत्यधिदैवतम् ॥ ३२२ ॥
अष्टोत्तरशतञ्चाथ अष्टाविंशतिमेव च ।
मूलनक्षत्रवच्छेषं होमशेषं समापयेत् ॥ ३२३ ॥
पूर्णाहुत्यन्तकर्माणि कृत्वा सम्पातकन्तथा ।
कुम्भाज्जलन्तु प्रक्षिप्य त्वभिषेकं समाचरेत् ॥ ३२४ ॥
दारपुत्रसमेतस्य यजमानस्य पूर्ववत् ।
अभिषेकन्तदाचार्यं ऋत्विग्भिः सहितः गुरुः ॥ ३२५ ॥
अभिमन्त्रितकुम्भाद्भिरभिषेकं समाचरेत् ।
तथा पौराणमन्त्रैश्च पल्लवैरभिषेचयेत् ॥ ३२६ ॥
आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च ।
भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ ३२७ ॥
योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः ।
मातापित्रोः शिशोश्चैव गंडदोषं व्यपोहतु ॥ ३२८ ॥

त्राता सर्वभूताना रक्षन्तु पितरः सदा।
सर्पनक्षत्रजातस्य चित्तञ्च शान्तिमान्धरान ॥ ३२९ ॥
एवं कृतेऽभिषेके तु सर्पशान्तिर्भवेद् ध्रुवम्।
ततः शुक्लाम्बरधरो यजमानः सुभूषितः ॥ ३३० ॥
दक्षिणाभिस्तता विप्रान् मूलवच्च प्रतोषयेत्।
भुक्तवद्भ्यश्च विप्रेभ्यः स्वीकुर्यादाशिषं गृही ॥ ३३१ ॥
इत्युक्तेन विधानेन सर्वारिष्टं व्यपोहति।
सर्वेप्सितार्थाः सिध्यन्ति वेदोक्तायुर्भविष्यति ॥ ३३२ ॥
इत्युक्तं सर्पशान्त्यर्थं सारभागमनोदितम्।
मानवानां हितार्थाय मनुना सार्वकामिकम् ॥ ३३३ ॥
सर्पाधीश नमस्तुभ्यं नागानाञ्च गणाधिप।
गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशान्तये ॥ ३३४ ॥

इत्यर्घ्यमंत्रः।

मूलनक्षत्रवत् कुर्यात् सर्पगण्डे स्वनामतः ॥ ३३५ ॥

इति मानवसंहितोक्ताश्लेषाशान्तिः।

वशिष्ठः—

सुरेशताराजनिताधरामजं द्विदेवताराजनितानुदेवम्।
पुरन्दरर्क्षे जनितः सुतस्तदा तस्यामजं हन्ति न यातिका यदि॥३३६॥

नृसिंहप्रसादे—

धराग्रजं हन्ति सुरेन्द्रजाता तथैव पत्न्या भगिनीम्पुमांश्च।
द्विदेवजा देवरमाशु हन्याद्भार्यानुजामाशु निहन्ति सूनुः ॥ ३३७ ॥
तद्दृष्टयान्त्योद्भवावर्ज्यदृष्ट्वा वृश्चिकपुच्छवत्।
चित्रार्द्धे पूर्वमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये।
जातः पुत्रश्चोत्तरार्धे विधत्ते मातापित्रोर्भ्रातरं चात्मनाशम् ॥ ३३८ ॥
द्विमासे चोत्तरादोषः पुष्ये चैव त्रिमासिकः।
पूर्वाषाढाष्टमे मासि चित्रा षाण्मासिकं फलम् ॥ ३३९ ॥
नवमासन्तथाश्लेषा मूले चाष्टकवर्षकम्।
ज्येष्ठा पञ्चदशे मासि पुत्रदर्शनवर्जिता ॥ ३४० ॥

पित्रोर्मृतिर्हस्तयमत्रिपादे
पितुस्तु पूर्वे खलपुष्ययोश्च।
द्वाष्ट्रान्तयोः स्यात्पितृमातृनाश-
श्चन्द्रोदये मातृवधोर्यमाये ॥ ३४१ ॥

वशिष्ठ —

विष्ट्यान्दारिद्र्यमाचष्टे कुलिकेऽङ्गस्य वैकृतिम् ।
यमघण्टे फलं न स्याद्रिक्तायां राजतामियात् ॥ ३४२ ॥
व्यतीपातेऽङ्गहानिः स्यात्परिघे मृत्युमादिशेत् ।
वैधृतौ पितृहानिः स्यान्नष्टेन्दावन्धतां व्रजेत् ॥ ३४३ ॥
मूले समूलनाशः स्यात्कुलनाशो धृतौ भवेत् ।
विपरीतप्रसूते तु नाभिनालेन वेष्टितम् ॥ ३४४ ॥
राष्ट्रस्य नृपतेश्चैव स्वस्यापि च विनाशकः ।
अधिकाङ्गे च हीने च सन्ध्ययारुभयोरपि ॥ ३४५ ॥
पर्वण्यपि प्रसूतौ च सर्वारिष्टभयप्रदः ।
तद्वत्सदन्तजाताश्च पादजातास्तथैव च ॥ ३४६ ॥
तस्माच्छान्तिम्प्रकुर्वीत ब्रह्माणं क्रूरचेतसाम् ।
दैवज्ञं पूजयेत्तस्माच्छान्त्या शान्तिर्भविष्यति ॥ ३४७ ॥

कृष्णचतुर्दश्यां विशेषमाह शौनकः—

कृष्णपक्षे चतुर्दश्याम्प्रसूतेः षड्विधं फलम् ।
चतुर्दश्याश्च षड्भागं कुर्यादादौ शुभं स्मृतम् ॥ ३४८ ॥
द्वितीये पितरं हन्ति तृतीये हन्ति मातरम् ।
चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥ ३४९ ॥
षष्ठे च धनहानिः स्यादात्मनो वंशनाशनम् ।
तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥ ३५० ॥

अथ पित्रोर्नक्षत्रे जन्मदोषः । तत्र देवकीर्तिः—

यद्येकस्मिन् धिष्ण्ये जायन्ते दुहितरोऽथवा पुत्राः ।
पितुरन्तकरा ह्येते यद्यपरे प्रीतिरतुला स्यात् ॥ ३५१ ॥

वशिष्ठ —

पित्रोस्तु जन्मनक्षत्रे जातस्तु पितृमातृहन् ।
जन्मर्क्षेशे च तल्लग्ने जातः सद्यो मृतिप्रदः ॥ ३५२ ॥

भृगु —

पितृजन्मनि ये जातास्ते घ्नन्त्युश्च तथा पितॄन् ।
मातृजन्मनि ये जाता मातॄणां घातकाः स्त्रियः ॥ ३५३ ॥

होरासारे—

पितृजन्माष्टमे जातं तदीशो लग्नगोपि वा ।
तेनैव पितृकार्याणि पितृश्रेष्ठो भवेत्सुतः ॥ ३५४ ॥

गार्गि —

एकास्मन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिर्व्रत्तयोर्मृत्युर्भवेदेकस्य निश्चितम् ॥ ३५५ ॥

मातृकाल्लीनमध्य दम्भपुत्रो भवेच्छुचिः ।
ग्रहवारे च नक्षत्रे जननाद्रोगपीडितः ॥ ३५६ ॥

शौनक —

ग्रहणे सूर्यचन्द्रस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तथा स्त्रीणामादौ तु दर्शनाद् भवेत् ॥ ३५७ ॥

इत्थं सञ्जायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्य शोकश्च कलहो भवेत् ॥ ३५८ ॥

मत्स्यपुराणधर्मोत्तरे—

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा ॥ ३५९ ॥

अमानुषानुमुण्डाश्च सञ्जातव्यञ्जनैस्तथा ।
हीनाङ्गाश्चाधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥ ३६० ॥

पशवः पक्षिणश्चैव तथैव च सरीसृपः ।
विनाशस्तस्य देशस्य सकुलस्य विनिर्दिशेत् ॥ ३६१ ॥

अथायोगादिजनितदोषशान्तिः

अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डावानाञ्च नामानि महादोषकराणि च ॥ ३६२ ॥

दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डे न परिघे वज्र च यमघटके ॥ ३६३ ॥

कालदण्डे मृत्युयोगे दग्धयोगे स्वधारणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्जायते यदि ॥ ३६४ ॥

अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञः शान्तिं कुर्याद् यथाविधि ॥ ३६५ ॥

यजमानो देवताना ग्रहाणाञ्चैव पूजनम् ।
दीप शिलालये भक्त्या घृतेन परिदापयेत् ॥ ३६६ ॥

अभिषेक शङ्करस्याश्वत्थस्य च प्रदक्षिणाम् ।
आयुर्वृद्धिकर जाप्य सर्वारिष्टविनाशनम् ॥ ३६७ ॥

गुरुदैवतविप्राणां पूजनं गोत्रवर्धनम् ।
पुष्ट्यर्थं तुष्टिशान्त्यर्थमभीष्टफलसिद्धये ॥
सर्वारिष्टविनाशार्थं यज्ञकर्म समाचरेत् ॥ ३६८ ॥

मन्त्रस्तु मृत्युंजये—

सर्वसम्पत्समृद्धिश्च नित्यकल्याणवर्द्धनम् ।
अभीष्टफलसिध्यर्थं कुर्याद् ब्राह्मणभोजनम् ॥ ३६९ ॥
अभिषेकं शिवे शान्तिं कृत्वा भक्त्या नरोत्तम ।
अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः ॥ ३७० ॥
गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् ।
शान्तिजाप्यं पुनश्चैव कृत्वा मृत्युञ्जयं भवेत् । ३७१ ॥
मूले वा सर्पगण्डे वा कुर्यादेतानि यत्नतः ।
आयुर्वृद्धिकरार्थाय गण्डदोषोपशान्तये ॥ ३७२ ॥

इत्युत्तरगार्ग्योक्तमूलादिदुष्टयोगशान्तिः ।

अथ कृष्णचतुर्दशीशान्तिविधिरुच्यते—

मन्दरस्थं सुखासीनं गार्गं मुनिवरं शुभम् ।
नमस्कृत्याथ पप्रच्छ शौनको मुनिपुंगवः ॥ ३७३ ॥
शान्तिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा ।
अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् ॥
दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ॥ ३७४ ॥

गर्ग उवाच—

कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् ॥ ३७५ ॥

इत्यादिपूर्वमेव लिखितम् ।

आचार्यं वरयेद्धीमान् पुत्रदारसमन्वितम् ।
स्वकर्मनिरतं शान्तं श्रोत्रियं वेदपारगम् ॥ ३७६ ॥
सर्वालङ्कारसंयुक्तं सर्वलक्षणसंयुतम् ।
ब्राह्मणान्नृत्विजांश्चैव स्वस्तिवाचनपूर्वकम् ॥ ३७७ ॥
रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः ।
तदर्धेन च वा कुर्याद्वित्तशाठ्यविवर्जित ॥ ३७८ ॥
प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुताम् ।
वृषभे च समासीनां वरदाभयपाणिकाम् ॥ ३७९ ॥

शुद्धस्फटिकसङ्काशं श्वेतमाल्याम्बरान्वितम् ।
त्र्यम्बकेण मन्त्रेण पूजां कुर्याद्विधानतः ॥ ३८० ॥
स्थापयन्चतुरः कुम्भांश्चतुर्दिक्षु यथाक्रमम् ।
पुण्यतीर्थजलोपेतान्यस्योपरि विन्यसेत् ।
तन्मध्ये स्थापयन् कुम्भं शतच्छिद्रसमन्वितम् ॥ ३८१ ॥
पञ्चरत्नम्पञ्चामृतं पञ्चत्वक् पञ्चपल्लवान् ।
पञ्चधान्यं सुवर्णं च तन्मन्त्रैर्विधिभिः क्षिपेत् ॥ ३८२ ॥
सर्वौषधानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ।
सुरभीणि च पुष्पाणि श्वेतानि परिवेदयेत् ॥ ३८३ ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ३८४ ॥
आवाह्य वारुणैर्मन्त्रैरनेन च विधानतः ।
इमम्मे वरुणेत्यनया तत्त्वायामीत्यृचा तथा ॥ ३८५ ॥
त्वन्नो अग्न इत्यनया सत्वन्न इति मन्त्रतः ।
आग्नेयं कुम्भमारभ्य पूजां कुर्याद्यथाक्रमम् ॥ ३८६ ॥
आनो भद्राख्यसूक्तेन भद्रा अग्नेश्च सूक्तकम् ।
जप्त्वा पुरुषसूक्तञ्च कद्रुद्र तु क्रमाज्जपेत् ॥ ३८७ ॥
ईश्वरस्याभिषेकञ्च महपूजाञ्च कारयन् ।
पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः ॥ ३८८ ॥
विस्तारायामखातञ्च अरत्निद्वयसंयुतम् ।
कुण्डकण्ठम्परित्यज्य समन्तादङ्गुलीक्रमात् ॥ ३८९ ॥
मेखलोच्छ्रायविस्तारौ चतुस्त्रिद्व्यङ्गुलीक्रमात् ।
पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः ॥ ३९० ॥
योनिं पञ्चाङ्गुलां तिर्यग्द्वादशाङ्गुलदैर्घ्यकाम् ।
अश्वत्थदलसङ्काशां किञ्चिन्निम्नायतां शुभाम् ॥ ३९१ ॥
कुर्यादाधारपर्यन्तं स्वगृह्योक्तविधानतः ।
समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः ॥ ३९२ ॥
अश्वत्थप्लक्षपालाशैः समिद्भिः खादिरैः शुभैः ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ ३९३ ॥
अष्टाविंशतिमेवैश्च होमं कुर्यात् पृथक् पृथक् ।
त्र्यम्बकेन मन्त्रेण तिलान् व्याहृतिभिः क्रमात् ॥ ३९४ ॥
महा एवञ्च होतव्या अस्मदुक्तविधानतः ।
एवंक्रमेण होतव्यं होमशेषं समापयेत् ॥ ३९५ ॥

सर्वालंकारयुक्तानां त्रयाणामभिषेचनम् ।
चतुर्भिः कलशैरद्भिर्द्वरकुम्भसमन्वितम् ॥ ३९६ ॥
धौताम्बराणि धृत्वाथ कुर्यादाज्यावलोकनम् ।
पूर्णाहुतिश्च जुहुयाद्यजमानः समाहितः ॥ ३९७ ॥
तस्मादनेन विधिना वित्तशाठ्यविवर्जितः ।
एवं यः कुरुते शान्तिं सर्वदोषैः प्रमुच्यते ॥
सर्वान् कामानवाप्नोति स्थिरजीवी सुखी भवेत् ॥ ३९८ ॥
इति उत्तरगार्ग्योक्तकृष्णचतुर्दशीशान्तिः ।

अथैकनक्षत्रजननशान्तिरुच्यते

एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चितम् ॥ ३९९ ॥
तद्दोषनाशाय तदा प्रशस्तां
शान्तिञ्च कुर्यादभिषेचनञ्च ।
सम्पूज्य ऋक्षप्रतिमां तदग्रे
दानञ्च कुर्याद्विभवानुसारम् ॥ ४०० ॥
तत्र शान्तिं प्रवक्ष्यामि सर्वाचार्यमतेन च ।
शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते ॥ ४०१ ॥
रिक्तां तिथिं विवर्ज्येत्तु प्रारम्भे दिवसे सुधीः ।
आचार्यं वरयेत् पूर्वं चतुरोथ द्विजोत्तमान् ॥ ४०२ ॥
पुण्याहं वाचयित्वा तु शान्तिकर्म समारभेत् ।
अग्नेरीशानदिग्भागे नक्षत्रप्रतिमान्ततः ॥ ४०३ ॥
तन्नक्षत्रोक्तमन्त्रेण अर्चयेत् कलशोपरि ।
रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत् ॥ ४०४ ॥
स्वशास्त्रोक्तेन मार्गेण कुर्यादग्निमुखन्ततः ।
अनेनैव तु मन्त्रेण हुनेदष्टोत्तरं शतम् ॥ ४०५ ॥
प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तान्तमेव च ।
अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः ॥ ४०६ ॥
वस्त्रालङ्कारगोदानैराचार्यं पूजयेत्ततः ।
ऋत्विग्भ्यो दक्षिणा दद्यान्माषत्रयसुवर्णकम् ॥ ४०७ ॥
देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ।
यानशय्यासनादींश्च दद्यात्तद्दोषशान्तये ।
भोजयेद् ब्राह्मणान् सर्वान् वित्तशाठ्यविवर्जितः ॥ ४०८ ॥
इति वृद्धगार्ग्योक्तैकनक्षत्रजननशान्तिः ।

अथ ग्रहणे जननशान्तिः

ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥ ४०९ ॥
इत्थं सञ्जायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ ४१० ॥
शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया ।
यस्मिन्नृक्षे विशेषेण ग्रहणं सम्प्रजायते ॥ ४११ ॥
तदृक्षाधिपतेः रूपं सुवर्णेन प्रकल्पयेत् ।
यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥ ४१२ ॥
सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः ।
चन्द्रश्चन्द्रग्रहे धीमान् रजतेन विशेषतः ॥ ४१३ ॥
राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः ।

नागेन सीसकेन इति ।

शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥ ४१४ ॥
तस्योपरि न्यसेद्धीमान् नववस्त्रं सुशोभनम् ।
त्रयाणाञ्चैव रूपाणां स्थापनं तत्र कारयेत् ॥ ४१५ ॥
रक्ताक्षतं रक्तगन्धं रक्तपुष्पाम्बराणि च ।
सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरञ्च यत् ॥ ४१६ ॥
श्वेतवस्त्रं श्वेतमाल्यं श्वेतगन्धाक्षतादिभिः ।
चन्द्रग्रहे प्रदातव्यं चन्द्रप्रीतिकरञ्च यत् ॥ ४१७ ॥
राहवे चैव दातव्यं कृष्णपुष्पाम्बराणि च ।
दद्यान्नक्षत्रनाथाय श्वेतगन्धानुलेपनम् ॥ ४१८ ॥
सूर्यं सम्पूजयेद् धीमानाकृष्णेनेति मन्त्रतः ।
चन्द्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥ ४१९ ॥
दूर्वाभिर्जुहुयाद् धीमान् राहोः सम्पीडनाय च ।
समिद्भिर्नक्षत्रवृक्षोत्थैर्भेशाय जुहुयाद् बुधः ॥ ४२० ॥
आज्येन चरुणा चैव तिलैश्च जुहुयात्तत ।
पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः ॥ ४२१ ॥
जलैरौषधकल्कैश्च सहितैः कलशोदकैः ।
अभिषेकं प्रकुर्वीत यजमानस्य यत्नतः ॥ ४२२ ॥
मन्त्रैर्वारुणदैवत्यैरापोहिष्ठादिभिस्त्रिभिः ।
इमम्मे गङ्गे पितरस्त्वायामीतिमन्त्रकैः ॥ ४२३ ॥

अभिषेके निवृत्ते तु यजमानः समाहितः।
आचार्यम्पूजयेत्पश्चात् सुदान्तो विजितेन्द्रियः ॥ ४२४ ॥
तस्मै दद्यात् प्रयत्नेन भक्त्या प्रतिकृतित्रयम्।
दक्षिणामिश्च संयुक्तं यथाशक्त्यनुसारतः ॥ ४२५ ॥
ब्राह्मणान् भोजयित्वा तु प्रणिपत्य क्षमापयेत्।
तेभ्योपि दक्षिणा दद्याद् यजमानः समाहितः ॥ ४२६ ॥
अनेन विधिना शान्तिं कृत्वा सम्यग्विशेषतः।
अकालमृत्यु शोकश्च व्याधिहानिमवाप्नुयात् ॥ ४२७ ॥
कारयेत् सुमना नित्य सौभाग्य लभते नर ।
इत्थ ग्रहणजाताना सर्वारिष्टविनाशनम्।
कथितं भार्गवेणेद शौनकाय महात्मने ॥ ४२८ ॥

इति शौनकोक्तग्रहणजन्मशान्ति।

अथ सजातीयापत्यप्रसवानन्तरं विजातीयापत्यप्रसवे शान्तिः।

शान्तिसर्वस्वे—

सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुता यदि।
मातापित्रोः कुलस्यापि तदारिष्टं महद्भयम् ॥ ४२९ ॥
ज्येष्ठनाशो धने हानिर्दुःखं तु सुमहद्भवेत्।
तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥ ४३० ॥
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने।
आचार्यमृत्विजौ वृत्वा ग्रहयज्ञपुरःसरम् ॥ ४३१ ॥
सह वा ग्रहयज्ञः स्यात् स्ववित्तस्यानुसारतः।
ब्रह्मविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः ॥ ४३२ ॥
पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः ।
पञ्चमे कलशे रुद्रं प्रजपेद् रुद्रसंख्यया ॥ ४३३ ॥
रुद्रसूक्तानि चत्वारि शान्तिसूक्तान्यनेकशः।
द्विज एको जपेद्धोमकाले शुचिसमाहितः ॥ ४३४ ॥
आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम्।
अष्टोत्तरसहस्रं वा शतं वा विंशतिन्तु वा ॥ ४३५ ॥
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरस्सरम् ।
मह्यादिमन्त्रैरिन्द्रस्य यत इन्द्रभयामहे ॥ ४३६ ॥
ततः स्विष्टकृतं हुत्वा बलि पूर्णाहुतिन्ततः।
अभिषेकं कुटुम्बस्य कृत्वाचार्यं प्रपूजयेत् ॥ ४३७ ॥

हिरण्यं धेनुरेका च ऋत्विग्भ्यो दक्षिणा ततः।
प्रतिमा गुरवे देया सपस्कारसमन्विता ॥ ४३८ ॥
कांस्याज्यवीक्षणं कृत्वा शान्तिपाठन्तु कारयेत्।
ब्राह्मणान् भोजयच्छक्त्या दीनानाथांश्च तर्पयेत्॥
एवं शान्तिविधानेन सर्वारिष्टं प्रलीयते ॥ ४३९ ॥

इति त्रिकशान्तिः।

अथ प्रसूतीस्नानम्। ग्रन्थान्तरे—

करेन्द्रभाग्यानिलवासवान्त्यमैत्रेन्द्वाश्विनुग्भे हि पुंसाम्।
तिथावरिक्ते शुभमामनन्ति प्रसूतिकास्नानविधिं मुनीन्द्राः ॥ ४४० ॥

अथ निष्क्रमणं, भूपालवल्लभे—

चतुर्थे वा तृतीये वा मासि पक्षे सिते पुनः।
रवौ चन्द्रे गुरौ शुक्रे बुधे चैव बुधैः स्मृतः ॥ ४४१ ॥
हस्तचित्रा तथा स्वाती रेवती चोत्तरात्रयम्।
अश्विनी मृगशिरा मूलं रोहिणी च पुनर्वसू ॥ ४४२ ॥
श्रवणा चानुराधा च यात्राशस्ते तिथौ पुनः।
कन्यायां च तथा सिंहे तुलाकुम्भे च शस्यते ॥ ४४३ ॥

अथ खट्वारोहणदुग्धपाने बृहस्पतिः—

खट्वारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा।
षोडशे दिवसे वापि द्वात्रिंशद्दिवसेपि वा ॥ ४४४ ॥

भविष्ये—

अभीष्टे पुण्यदिवसे चन्द्रतारावलान्विते।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः॥
योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् ॥ ४४५ ॥

श्रीधरः—

एकविंशद्दिने चैव पयः शंखेन पाययेत्।
अनुप्राशेन नक्षत्रदिवसोदयराशिषु ॥ ४४६ ॥

अथ सूतिकाक्वाथः। तत्र गणपतिः—

भैषज्यगदिते धिष्ण्ये वारे दुर्योगवर्जिते।
आरोग्यहेतवे क्वाथः सूतिकायाश्च तच्छिशोः ॥ ४४७ ॥

अथ सूतिकापथ्यं तत्रैव—

अन्नाशनोक्तनक्षत्रे शुभाहे स्वशुभालिनि।
हित्वा रिक्तां च दुर्योगं सूतिकापथ्यमीरितम् ॥ ४४८ ॥

अथ कटिसूत्रभूम्युपेशने । तत्रैव—

पुष्यहस्ताश्विनीमूलत्र्युत्तरे रोहिणे मृगे।
ज्येष्ठायामनुराधाया शुभाहे मासि पञ्चमे ॥ ४४९ ॥
कुजे शुद्धे समभ्यर्च्य वराह धरणीं भुवि।
कटिसूत्रमथो बद्ध्वा बालकञ्चोपवेशयेत् ॥ ४५० ॥
पुस्तकं लेखनीं शस्त्र वस्त्रं वस्त्र रौप्यञ्च काञ्चनम्।
तस्मिन् काले यदा दत्ते तद्वशाज्जीवनं शिशोः ॥ ४५१ ॥

उक्तञ्च पद्मपुराणे—

पञ्चमे च तथा मासि भूमौ तमुपवेशयेत्।
तत्र सर्वे ग्रहाः शस्ता भौमो वासविशेषतः ॥ ४५२ ॥
तिथिञ्च वर्जयेद्रिक्ता शस्तानि शृणु भानि मे।
उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥ ४५३ ॥
प्राजापत्यञ्च हस्तञ्च शस्तमाश्विनमित्रभम् ।
वराहं पूजयेद्देवं पृथिवीञ्च तथा महान् ॥ ४५४ ॥

मंत्रा अपि तत्रैवोक्ताः—

रक्षैनं वसुधे देवि सदा सर्वगते शुभे।
आयुःप्रमाण निखिलं निःक्षिपस्व हरिप्रिये ॥ ४५५ ॥
अचिरादायुपस्तस्य ये केचित् परिपन्थिनः।
जीविताऽऽरोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥ ४५६ ॥
धारिण्यशेषभूताना मातस्त्वमधिका ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ ४५७ ॥
तस्योपवेशन कृत्वा भूमौ ब्राह्मणभोजनम्।
ततः कृत्वानु तत्कार्यमुत्सवं पूर्ववद् द्विज ॥ ४५८ ॥

मार्कण्डेयः—

अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वशः।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥ ४५९ ॥
प्रथमं यत् स्पृशेद् बालो गृह्णाति स्वयं तदा।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ ४६० ॥

बहुधातुजीविकापरीक्षामन्नप्राशनसमय एव कुर्वन्तीति शिष्टाचारः।

अथ ताम्बूलभक्षणम्, नन्दीश्वरः—

सार्धमासद्वये पूगं ताम्बूलञ्च शिशोर्हितम्।
पड्भिरन्नभुजो मासैर्भोगभाजो भवेन्नरः ॥ ४६१ ॥

अत्रैवान्नप्राशनसमये वा प्रोक्तं तच्च शिष्टाचारदर्शनादुक्तम्

दीपिकायाम्—

मूलाश्विमैत्रवरतिष्यहरीन्दुभेषु
पौष्णे तथा मृगशिरोदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलनूतनदलाशनं शुभाय ॥ ४६२ ॥

दलानि पर्णानि । विशेषः स्मृतिभ्योऽनुसन्धेयः । यथा—

ताम्बूल सुष्ठु यो दद्याद् ब्राह्मणेभ्योऽतिभक्तितः ।
मेधावी सुभगः प्रोक्तो दर्शनीयश्च जायते ॥ ४६३ ॥
फलेन तृप्यते ब्रह्मा पत्रेण भगवान् हरिः ।
चूर्णमीश्वरतृप्त्यै स्यात्ताम्बूलाशनदानतः ॥ ४६४ ॥
एकद्वित्रिचतुःपञ्चषट्भिः पूगफलानि च ।
लाभाऽलाभौ सुखं दुःखमायुर्मरणमेव च ॥ ४६५ ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे धनसंक्षयः ।
चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ ४६६ ॥
पर्णाग्रं पर्णपृष्ठं वा चूर्णपर्णं द्विपर्णकम् ।
रात्रौ खदिरताम्बूलं शक्रस्यापि श्रियं हरेत् ॥ ४६७ ॥
अशास्त्रविधिना पर्णपूगं खादति यो नरः ।
सप्तजन्मदरिद्रः स्यादन्ते विष्णुं न संस्मरेत् ॥ ४६८ ॥

अथान्नप्राशनम्

शिशुबोधिन्याम्—

मासि षष्ठेऽष्टमे चापि कन्यायाः पञ्चमे पुनः ।
रवौ बुधे गुरौ शुक्रे शुक्लपक्षे बुधैः स्मृतम् ॥ ४६९ ॥
हस्तचित्रा तथा स्वाती विशाखा चोत्तरात्रयम् ।
मघा मूलं तथा ज्येष्ठाऽनुराधा च पुनर्वसू ॥ ४७० ॥
रोहिणी मृगशिरा पुष्यश्चाश्विनी रेवती तथा ।
कन्यायाश्च तथा मीने मिथुनेऽपि वृषेऽपि च ॥ ४७१ ॥
द्वितीया च तृतीया च पञ्चमी दशमी तथा ।
त्रयोदशी तथा शस्ताः प्रक्तेऽपि च सूरिभिः ॥ ४७२ ॥

चन्द्रवारस्तथा शस्तो मते केषाञ्चिदेव हि।
मन्दानलफलत्वाच्च नैव सर्वैः प्रशस्यते ॥ ४७३ ॥

श्रीधरीये—

आदित्यतिष्यवसुसौम्यनिलाश्विचित्रा-
हस्ताजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्ध-
रिक्ता विहाय नवमीतिथयः शुभाः स्युः ॥ ४७४ ॥
वारांशकश्च गुरुशुक्रशशी कुजानां
मेषालिमीनरहितानि हितानि भानि।
भुक्तौ शिशोः शिशुकराः परिहृत्य सौम्यं
भौमं सितं नवमनैधनसप्तमेषु ॥ ४७५ ॥

वशिष्ठः—

बालान्नभोजनविधौ गुरुशुक्रमौढ्यं
मासप्रयुक्तमशुभं त्वधिमासदोषः ।
नास्त्यत्र वा शुभविधाविह मासि पष्ठे
युग्मे च मासि परतः सितचन्द्रपक्षे ॥ ४७६ ॥

युग्मेषु मासेषु च षष्ठमासे
नवान्नपानं नियतं शिशूनाम्।
अयुग्ममासेषु च कन्यकानां
नवान्नसंप्राशनमिष्टमेतत् ॥ ४७७ ॥

तत्रापि शुक्लपक्षे पूर्वाह्ण एव कर्तव्यः शुक्लपक्षे च पूर्वाह्णे इति नारदोक्तिः।

नारदः—

रिक्तां तिथिक्षयं नन्दां द्वादशीमष्टमीमपि।
त्यक्त्वान्यतिथयः श्रेष्ठाः प्राशने शुभवासराः ॥ ४७८ ॥

कश्यपः—

द्वादशीमष्टमीं रिक्तां नन्दाञ्चैव दिनक्षयम्।
सूर्यार्किभौमवारांश्च त्यक्त्वान्य - शुभवासरे ॥ ४७९ ॥

-नवान्नप्राशनमित्यनुवर्त्तते।

तथा चोक्तं प्रवीनैः—

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा।
त्रयोदशी च दशमी प्राशने तिथयः शुभाः ॥ ४८० ॥

कन्दिरवुधगुरुवाराः प्रशस्ता उक्ता, अन्ये निषिद्धाः ।

उक्तञ्च—

शशिशुक्रे च मन्दाग्निः शनौ भौमे बलक्षयः ।
बुधार्कगुरुवारेषु प्राशनं हि शुभावहम् ॥ ४८१ ॥

तदेतन्निर्मूलत्वादुपेक्ष्यम् ।

नारद —

न वैधृतौ व्यतीपाते विष्ट्या गण्डातिगण्डयोः ।
शूले वज्रे न परिघे बालान्नप्राशनं हितम् ॥ ४८२ ॥

कश्यप —

जन्मराशिविलग्नाभ्यां नैधनेशे च वर्जयेत् ।
मीनकुम्भतुलाकन्यासिंहकर्कनृयुग्मगाः ।
शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥ ४८३ ॥

वशिष्ठ —

विष्णुरुष्णकिरणो हिमरश्मिर्वायुमित्रवरुणादितिचित्राः ।
अश्विनिष्यवसुपौष्णभवो हि त्र्युत्तराश्च शिशुभोजनताराः ॥ ४८४ ॥

बालान्नमुक्तौ व्रतबन्धनेऽपि
राज्याभिषेके खलु जन्मधिष्ण्यम् ।
शुभन्त्वनिष्टं सततं विवाह-
सीमान्तयात्रादिषु मङ्गलेषु ॥ ४८५ ॥

यत्तु गुरुवचनम्—

जन्मर्क्षकर्मनक्षत्रे आधानर्क्षे च वर्जयेत् ।
कर्णवेधं तथा यानं क्षुरकर्मान्नभोजनम् ॥ ४८६ ॥

एषां लक्षणमुक्तं मुहूर्तसंग्रहे—

जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् ।
एकोनविंशमाधानं त्रयोविंशं विनाशनम् ॥ ४८७ ॥

त्रयोविंशव्यतिरिक्तानां सर्वेषां जन्मनक्षत्रत्वमस्तीति तदेतद्वार्षिकनवान्नभोजन-विषयम् । अत एव लोकेऽन्नभोजननवान्नप्राशनशब्दयोः साधारणत्वेन व्यवहारोपलम्भात् ।

जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ।
चौरभैषज्यवादाध्वकर्त्तनेषु विवर्जयेत् ॥ ४८८ ॥

इति दीपिकायां निषेधानुपलम्भाच्च। तस्मात्प्रथमदशमैकोनविंशेषु जन्मनक्षत्रेषु बालान्नप्राशनं प्रशस्ततरमिति पीयूषधाराकारस्य सिद्धान्तः। अन्नाद्यान्नप्राशने विद्धनक्षत्रमपि वर्ज्यम्।

यदुक्तं दीपिकायाम्—

कर्णवेधे विवाहे च व्रते पुंसवने तथा।
प्राशने चाद्यचूडायां विद्धमृक्षं परित्यजेत् ॥ ४८९ ॥

वेधप्रकारो विवाहप्रकरणे वक्ष्यते।

अथ कर्णवेधः

श्रीपतिः—

लाभे तृतीये च शुभैः समेते क्रूरैर्विहीने शुभराशिलग्ने।
वेध्यौ तु कर्णौ त्रिदशेज्यलग्ने पुष्येन्दुचित्राहरिपौष्णभेषु ॥ ४९० ॥
शिशोरजातदन्तस्य मातुः क्रोडगतस्य च।
सुताया वेधयेत् कर्णौ सूच्या द्विगुणसूत्रया ॥ ४९१ ॥

मुहूर्तगणपतौ—

रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः।
श्रवणद्वितये चित्रा मृगे हस्ते शुभे तिथौ ॥ ४९२ ॥
युग्माब्दं जन्ममासञ्च पौषं चैत्रं हरेः शयम्।
जन्मतारां विहायाथ त्र्युत्तरेऽपि च कश्चन ॥ ४९३ ॥

व्यवहारोच्चये—

न जन्ममासे न च चैत्रपौषे
न जन्मताराsu हरौ प्रसुप्ते।
तथा न रिक्ते न च विष्टिदुष्टे
कर्णप्रवेधोऽपि समे न वर्षे ॥ ४९४ ॥

अत्र चैत्रस्य निषेधो मीनार्कविषयः। पौषनिषेधो धनुरर्कविषयः अन्यथा व्यासवचनमसंगतं स्यात्। तथाहि—

व्यासः—

कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभेऽहनि ॥ ४९५ ॥

अत्र कार्तिकशुक्लपक्षैकादशीतः कार्तिकः प्रशस्तः। पूर्वस्य देवशयनत्वान्निषेधः। किञ्च दक्षिणायनमप्यत्र निषिद्धम्।

यदाह कृत्यचिन्तामणौ गर्गः—

कर्णवेधव्रतं कुर्यादुदङ्मार्गस्थिते रवौ ।
दक्षिणाशास्थिते भानौ नैव कुर्यात् कथञ्चन ॥ ४९६ ॥

व्यवहारोऽप्येवमेव अत्र जन्ममासे वर्ज्यान्तराण्यप्याह प्रयोगजाते

व्यासः—

यो जन्ममासे क्षुरकर्मयात्रां
वर्णस्य वेधं कुरुते च मोहात् ।
मूढः स रोगी धनपुत्रनाशं
प्राप्नोति नूनं निधनं ततश्च ॥ ४९७ ॥

जगन्मोहने वसिष्ठः—

मासे षष्ठे सप्तमे वाष्टमे वा विष्यौ कर्णौ द्वादशे षोडशेऽह्नि ।
मध्ये चाह्नः पूर्वभागे न रात्रौ — ॥ ४९८ ॥
द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्तास्तृतीया कर्णवेधने ॥ ४९९ ॥
भूमिजार्कात्मजार्काणां वारान् स वर्जयेत् सुधीः ।
जीवेन्दुबुधशुक्राणां दिवसाः परिपूजिताः ॥ ५०० ॥
भौमे स्फुटयति कर्णश्च शनौ मृत्युभयं वदेत् ।
शनौ शीघ्रव्रणं चैव रवौ मध्यफलं तथा ॥ ५०१ ॥

सोमभट्टः—

जम्भारातिपुरोहिते हरिगवे सुप्ते मुकुन्दे विभौ
जाते घर्मघृणौ धनुर्मकरयोः क्षीणे तु वारे निशि ।
अस्ते मार्गवजीवयोः कुजदिने मासाधिके वैधृतौ
गण्डान्तव्यतिपातविष्टिषु बुधैर्वेधन्न कार्यं श्रवः ॥ ५०२ ॥

अशुद्धसमये कर्णवेधो न कार्यं इति शिष्टाचारः ।

अथ कन्यायाः नासिकावेधः

मुहूर्तगणपतौ—

कर्णवेधोक्तभं शस्तं कन्याया घ्राणवेधने ।
जीवशुक्रज्ञवारेषु रिक्तां पर्व च वर्जयेत् ॥ ५०३ ॥

अथाद्यक्षौरः ।

मासमुच्चये—

माघादिमासषट्केषु चौरमाद्यञ्च शस्यते ।
वारादित्यशशाङ्केषु प्रशस्तेषु च शोभनम् ॥ ५०४ ॥

ज्येष्ठे मासि तथा मार्गे चौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत् ॥ ५०५ ॥
षष्ठे द्वादशके मासि तृतीये दशमेऽपि च ।
चतुर्थे दशमे चौरं न कुर्यात्प्रथमं शिशोः ॥ ५०६ ॥
हस्तत्रयं मृगशिरा श्रवणत्रयञ्च
पौष्णाश्विशक्रगुरुभानि पुनर्वसू च ।
वारेषु चन्द्रबुधवाक्पतिभार्गवाणां
चौरं शुभं शुभतिथौ शुभतारकासु ॥ ५०७ ॥
विषमे वत्सरे चापि शुभचन्द्रेषु शोभनम् ॥ ५०८ ॥
श्रीपतिः—
पुष्ये पौष्णे चाश्विनीसेन्दवेषु
शाक्रे हस्ताद्ये त्रिके भेऽथादित्याम् ।
क्षौरं कार्यं वैष्णवाद्ये त्रये च
मुक्त्वा भौमादित्यपातङ्गिरावान् ॥ ५०९ ॥
सोमभट्टः—
मासादिपञ्चके चौरं हित्वा क्षीणं विधुं मधुम् ।
क्रूरवारं निशां रिक्तां षष्ठीं सन्ध्याञ्च जन्मभम् ॥ ५१० ॥
जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ।
क्षौरकर्मणि वादाध्वकर्तनेषु च वर्जयेत् ॥ ५११ ॥
क्षौरेऽव्ययारिगाः क्रूराः शस्ता द्वयङ्गाग्निगाः शुभाः ।
तावत्क्षौरं शिशोर्नेष्टं यावन्मातास्ति गर्भिणी ॥ ५१२ ॥
कुम्भे कर्कटके चैव कन्यायां कार्मुके रवौ ।
लोमखण्डे गृहस्थस्य पितॄन् प्राशयते यमः ॥
पञ्चाब्दात् परतश्चैव गर्भिण्यामपि कारयेत् ॥ ५१३ ॥

अत्राद्यक्षौरमशुद्धादिषु अपि कार्यम् । इति शिष्टाचारः । यत्तु मुहूर्तचिन्तामणौ—दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणादि तत्र मुण्डनशब्देन चौलमहणमिति शिष्टाचारदर्शनात् भ्रमः ।

इति मुण्डनविधिः ।

अथ चौलकर्म

सोमभट्ट —

चूडाकर्मनृपाभिषेकनिलयाग्न्याधानपाणिग्रहो
देवस्थापनमौञ्जिबन्धनविधीन् कुर्यान्न याम्यायने ।
देवेज्याम्फुजितास्तथास्तमितयोर्बाल्ये च वार्द्धक्यन्तयोः
केतावभ्युदित तथा महणतो यावत्तिथिश्चाष्टमो ॥ ५१४ ॥

मुहूर्त्तगणपतौ—

जलाशयसुरारामप्रतिष्ठाव्रतबन्धनम् ।
अग्न्याधानं विवाहश्च चौल राज्याभिषेचनम् ॥ ५१५ ॥
नवगृहप्रवेशादीन्न कुर्याद् दक्षिणायणे ।
गुरुभार्गवयोरस्ते बाल्यवार्धकयोरपि ॥ ५१६ ॥

महेश्वर —

चूडाकमनृपाभिषेकनिलयाग्न्याधानपाणिग्रहान् ।
देवस्थापनमौञ्जिबन्धनविधीन कुर्यान्न याम्यायने ॥ ५१७ ॥

रत्नमालायाम्—

गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम् ।
सौम्यायने कर्म शुभ विधेय यद्गर्हितन्तत् खलु दक्षिणे तु ॥ ५१८ ॥

बाल्यवार्द्धक्यमाह गणपतिः—

दशाह पश्चिमे बाल्य पञ्चाह वार्द्धक भृगोः ।
प्राच्यान्तु त्रिदिन बाल्य पक्ष वार्द्धक्यमुच्यते ॥ ५१९ ॥
पञ्चबाल्यञ्च वार्द्धक्य भृगौ त्याज्ये शुभे सदा ।
दशाहं बाल्यवार्द्धक्ये परे सप्ताहमूचिरे ॥ ५२० ॥
अह्नश्चावश्यके कृत्ये केचिद्भार्गवजीवयोः ।
अर्द्धाहं बाल्यमब्जस्य वार्द्धक त्रिदिन विदुः ॥ ५२१ ॥

देशविशेषे—

अवन्तिदेशे सप्ताहं षड् वङ्गे दशविन्ध्यके ।
पञ्च हूणे द्वयोर्वेते शेषदेशेषु वै त्रिकम् ॥ ५२२ ॥

महेश्वर —

बालः शुक्रो दिवसदशक पञ्चक चैव वृद्धः
पश्चादह्ना त्रितयमुदित पक्षमैन्द्र्या क्रमेण ।
जीवो वृद्धः शिशुरपि सदा पक्षमन्यैः शिशू तौ
वृद्धौ प्रोक्तौ दिवसदशक चापरैः सप्तरात्रम् ॥ ५२३ ॥

गर्गः —

शुक्रो गुरुः प्राक् परतश्च बालो
विन्ध्ये दशावन्तिषु सप्तरात्रम् ।
वङ्गेषु हूणेषु च षट् च पञ्च
शेषे तु देशे त्रिदिनं वदन्ति ॥ ५२४ ॥

वशिष्ठ —

वृद्धत्वमिन्दोस्त्रिदिनं दिनार्धं बाल्यत्वमस्तत्वमहर्द्वयञ्च ।
अस्ते वियोगे मृत्युमुपैति कन्या बाल्येऽन्यसक्ता विधवा च वृद्धे ॥ ५२५ ॥

बालोऽपीन्दुः शुभ एव प्रोक्तः ।

कश्यप —

वृद्धे चन्द्रे स्त्रियं हन्ति पतिं हन्त्यस्तमागतः ।
यतस्त्वमृतरश्मित्वाद् बालोऽपि शुभदः शशी ॥ ५२६ ॥

शुक्रोदयास्तमानमाह गणपतिः —

प्राच्यां नेत्रेषु दग्वस्तान्दृश्यो भवति भार्गवः ।
वसुशैलमितास्तत्र यातोऽस्तं नैव दृश्यते ॥ ५२७ ॥
खबाणाश्विमितान्यस्तान्प्रतीच्यां दृश्यते भृगुः ।
तत्रैवार्ककरमस्तो नवाहानि न दृश्यते ॥ ५२८ ॥

गुरूदयास्तमानमपि तत्रैव—

प्राच्यां वाचस्पतिर्मासं भवत्यदृश्यामगोचरः ।
प्राच्यामुदयते मासं याति पश्चात्तु वत्सरात् ॥ ५२९ ॥

धूमकेतोरुदयास्तमाह चण्डेश्वरः—

केतोरस्तदिनार्द्धं सप्ताहं मङ्गलं त्यजेत् ।
यावत्केतूदयस्तावदशुद्धः समयो हि सः ॥ ५३० ॥

वाराह —

दृष्टः षोडशवासरानशुभदः कैश्चित्प्रदिष्टः शिखी ।
केतूदये सप्तदिनानि चाथ्र्वं विवाहयात्रादिषु गर्हितानि ॥
दिनानि शेषाण्यशुभानि नूनं वदन्ति वाराहमुखा मुनीन्द्राः ॥ ५३१ ॥

केतुस्वरूपाणि फलानि च गर्गोक्तानि—

त्रिशिखाश्च त्रितारश्च रक्तलोहितरश्मयः ।
प्रायशस्तूत्तरामाशां सेवन्ते नित्यमेव ते ॥ ५३२ ॥
लोहिताङ्गारमना ज्ञेया ग्रहाः षष्टिसमासतः ।
नामतः कौङ्कुमा ज्ञेया राज्ञां सप्रामकारकाः ॥ ५३३ ॥

कृष्णभाः कृष्णपर्यन्ता मद्गल्वाः कृष्णरश्मयः।
राहुपुत्रा रूपशिखाः कीलकास्त्वविदारणाः ॥ ५३४ ॥

श्रीधरीये—

वर्षे तृतीयेऽथ पञ्चमे वा
गते त्रिभागे प्रवदन्ति चौलम्।
उदग्गतेऽर्के गुरुशुक्रतेजः
प्रकाशिते व्योम्नि च शुक्लपक्षे ॥ ५३५ ॥

नारदः—

अष्टमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके।
न नैधने मे शीतांशौ पञ्चाष्टान्त्यविवर्जिते।
धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः ॥ ५३६ ॥
कुर्याच्चूडाकरणमिति।

राजमार्तण्डे—

उत्तरवर्त्मनि सवितरि चूडाकरणं जगुः शुभं यवनाः।
चैत्रे मासि दिवाकरवारे गुरुसन्निधाने च ॥ ५३७ ॥

चण्डेश्वर—

वागीशशुक्रशनिशाकराणां
वारे प्रशस्तं मुनयो वदन्ति।
क्षौरं दिने तीक्ष्णरुचेस्तु चैत्रे
मासेऽथ वा सन्निहिते हुताशः ॥ ५३८ ॥

होमपूर्वकं येषां चूडाकरणं तेषां मन्त्रविधिः—

अत्रि—

तृतीयमासे चौलन्तु सर्वकामार्थसाधनम्।
सवत्सरेण चौलेन आयुष्यं ब्रह्मवर्चसम्॥
पञ्चमे पशुकामस्य युग्मे वर्षे तु गर्हितम् ॥ ५३९ ॥

श्रीधरीये—

आदित्यसौम्यवसुवैष्णवपौष्णतिष्य-
त्वाष्ट्राश्विचन्द्रकिरणेषु दिवा प्रशस्तम्।
स्वातीविधातृवरुणोत्तरभानि मध्या-
न्याह्नर्निशासु न हि क्षौरक्रिया प्रशस्तम् ॥ ५४० ॥
षष्ठयष्टमीप्रतिपदस्तिथयश्च रिक्ता
वर्ज्याः शशाङ्कगुरुसोमजभार्गवानाम्।
वारांशकोदयविलोकनमिष्टमाहुः
क्षौरे च कर्मणि पराशरकश्यपाद्याः ॥ ५४१ ॥

कर्काङ्गनामिथुनमीनतुलोचनक्राः
पूज्याः क्रियालिहरिचापधरा जघन्याः।
तैरस्त्ववीर्यशुभदृष्टियुता विधेया
चौले घटः शुभयुतोऽपि निषिद्ध एव ॥ ५४२ ॥

नारदः—

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्।
पञ्चाब्दात्प्रागथोर्ध्वन्तु गर्भिण्यामपि कारयेत ॥ ५४३ ॥
यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं भवेत्।
सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥ ५४४ ॥

प्रचेताः—

यस्य मांगलिकं कृत्यं तस्य माता रजस्वला।
तदा सा मृत्युमाप्नोति पञ्चमं दिवसं विना ॥ ५४५ ॥

अन्यच्च—

विवाहोत्सवकार्येषु माता चैव रजस्वला।
वैधव्यं जायते तत्र नूनार्याः पाणिपीडने ॥ ५४६ ॥

वैधव्यमन्यत्र मृत्युरित्यर्थः।

राजमार्तण्डे—

रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ।
क्षौरं ताराशुद्धौ शेषश्चन्द्राश्रितं कर्म ॥ ५४७ ॥

ज्योतिर्निबन्धे—

विवाहे सविता शस्तो व्रतबन्धे च वाक्पतिः।
क्षौरे ताराविशुद्धिश्च शेषे चन्द्रबले बलम् ॥ ५४८ ॥

चौलप्रयोजनमाह वशिष्ठः—

सर्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः।
केशमूलं पिता ज्ञेयं केशाग्रं जननी तथा ॥ ५४९ ॥
चौलेनैवायुषो वृद्धिः चौलेनैवायुषः क्षयः।
तस्माच्चौलं प्रयत्नेन कारयेद् बुद्धिमान्नरः ॥ ५५० ॥

अथाक्षरारम्भः

सम्प्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने।
षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् ॥ ५५१ ॥
रिक्तां पञ्चदशीं चैव सौरिभौमदिने तथा।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥ ५५२ ॥

पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम्।
स्वविद्या सूत्रकारांश्च स्वाश्च विद्यां विशेषतः॥ ५५३॥
नमस्ते बहुरूपाय विष्णवे परमात्मने।
स्वाहा इत्यनेन च त्रिः श्रद्धया परिपूजयेत्॥ ५५४॥
भद्रकाल्यै नमस्तुभ्यं सरस्वत्यै नमो नमः।
वेदवेदाङ्गवेदान्तविद्यास्थानेभ्य एव च॥ ५५५॥

स्वाहा इति त्रि. पूजयेत्।

तथा च श्रीधरीये—

उदगगते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम्।
सरस्वतीविष्णुविनायकांश्च गुर्वोदनाद्यैरभिपूज्य कुर्यात्॥ ५५६॥

मुहूर्तगणपतौ—

सौम्यायने शुभे मासि स्वाध्यायदिवसे शुभे।
रवौ जीवे बुधे शुक्रे लग्ने खेटबलान्विते॥ ५५७॥
रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः।
आर्द्राख्ये श्रवणे हस्ते स्वाती चित्राभिधे तथा॥ ५५८॥
हेरम्बविष्णुवाग्लक्ष्मीस्तथाभ्यर्च्येष्टदेवताम्।
पञ्चमाब्दे नरः कुर्याद् विद्यारम्भं सदा बुधः॥ ५५९॥

अथोपनयनम्

कश्यप—

अथातः सम्प्रवक्ष्यामि चोपनायनमुत्तमम्।
द्विजत्वकरणं श्रौतस्मार्तकर्मप्रसाधनम्॥ ५६०॥
आद्यं सर्वाश्रमाणाञ्च देहसंस्कारकारणम्।
अनेन कर्मणा सर्वे संस्कृताः सर्वदेहिनः।
तत्संस्कारं लग्नवशात् तस्माल्लग्नं प्रवच्मि तत्॥ ५६१॥

नारदः—

आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम्।
राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम्॥ ५६२॥

अत्र जन्मतः षट्परिमितगौरवर्षद्विपरिमितमासाद्दूर्ध्वगर्भाष्टममिति शिष्टाचारः।

विश्वप्रकाशपद्धतौ आपस्तम्बः—

गर्भाष्टमेऽष्टमे वाब्दे पञ्चमे सप्तमेऽपि वा।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः॥ ५६३॥

ब्रह्मवर्चसकामश्चेद् गर्भतो जन्मतोपि वा।
पञ्चमेऽब्दे प्रकुर्वीत ब्राह्मणस्योपनायनम् ॥ ५६४ ॥

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छता ॥ ५६५ ॥

कर्तव्यं दशमे वर्षे धनकामस्य चैव हि।
एकादशाब्देन्द्रियार्थी पश्वर्थी द्वादशाब्दके।
द्वादशाब्दे त्वतिक्रान्ते प्रार्यश्चित्तात्मको द्विजः ॥ ५६६ ॥

आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ।
अत ऊर्ध्वं पतन्त्येते यथाकालमसंस्कृताः॥
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ ५६७ ॥

गौणकालातिक्रमे याज्ञवल्क्येन विशेषोऽभिहितः—

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ५६८ ॥

आचार्यव्यवस्थामाह सोमभट्टः—

पिता पितामहो भ्राता पितृव्यो मातुलस्तथा।
उपानयेऽधिकारी स्यात् पूर्वाभावे परः परः ॥ ५६९ ॥

सारसमुच्चये—

अयने चोत्तरे भानौ चन्द्रे ऋक्षे च शुद्धके।
जीवार्कयोस्तथा शुद्धौ दिने जीवार्कभार्गवे ॥ ५७० ॥
नानध्याये न मन्वादौ युगादौ नाऽपि कारयेत्।
गलग्रहतिथौ रिक्ते व्रतबन्धं परित्यजेत् ॥ ५७१ ॥

गुरुशुद्धिर्मुहूर्तचिन्तामणौ—

वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयान्यत्र निन्दितः ॥ ५७२ ॥

उक्तञ्च वराहेण—

द्विस्त्रिकयजन्मारिरिःफमध्यभेषु जन्मर्क्षतो वाञ्छति वज्रपाणेः।
पूजां पुरोधा न स एव कांस्त्यथाद्यमप्रान्त्यरसावलस्थः ॥ ५७३ ॥

श्रीपतिः—

स्वायधर्मतनयद्युनस्थितो नाकनायकपुरोहितः शुभः ॥ ५७४ ॥

वशिष्ठेन तु विशेष उक्तः—

बन्धौ तृतीये रिपुराशिसंस्थे वाञ्छन्ति पूज्यां दशमे सुरेज्ये ।
नेच्छन्ति पुनर्जनिगे व्ययस्थे पुरातना अष्टमगेऽपि सूरौ ॥ ५७५ ॥

वसिष्ठः—

धर्मार्थलाभसुतसप्तगते सुरेज्ये
मौञ्जीव्रतं शुभकरं च वटोः नितुश्च ।
जन्माष्टबन्धु-रिपु रिष्फ नभस्तृतीये
दारिद्र्यशोकबहुरोगकरो गुरुस्तु ॥ ५७६ ॥
नीचारिराशावतिनीचभागे पराजिते वापि गुरौ सिते वा ।
मौञ्जीव्रतं यस्य करोति नूनं स वेदशास्त्रस्मृतिकर्महीनः ॥ ५७७ ॥

श्रीपतिः—

स्वोच्चे स्वमित्रे स्वगृहे त्रिकोणे जीवो गतो यद्यपि नीचकाले ।
शिष्टाः सहस्रैश्चतुरस्रजन्मकर्मान्त्यषष्ठेऽपि शुभं वदन्ति ॥ ५७८ ॥

बृहस्पतिः—

धनचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ ५७९ ॥

भारद्वाजः—

धनुर्मीनकुलीरस्थो जीवो जन्मान्त्यमृत्युगः ।
अतिसौख्यं वटोः कुर्याद्वशिष्ठवचनं यथा ॥ ५८० ॥

लघुहारीतः—

व्रतबन्धो द्विजातीनां विशुद्ध्या जीवशुक्रयोः ।
चन्द्रशुद्ध्या तु वैश्यानां क्षत्रियाणां कुजार्कयोः ॥ ५८१ ॥

द्विजादीनां ब्राह्मणानामित्यर्थः ।

पौलस्त्यः—

पञ्चमे षष्ठवर्षे च सगर्भे सप्तमेऽपि वा ।
गुरुसूर्यशशांकानां विशुद्ध्यारम्भयेद् व्रतम् ॥ ५८२ ॥
यदा गर्भाष्टमे वर्षे शुद्धिर्नास्ति बृहस्पतेः ।
अष्टमे वा तथाप्येवं व्रतं तत्र न कारयेत् ॥ ५८३ ॥

एवञ्चाष्टमवर्षावधि गुरुशुद्धेरावश्यकी गौणकाले तु नावश्यापेक्षणीयेति बहवः ॥ वस्तुतस्तु गर्भाष्टमादौ मुख्यकालेऽपि गुरुशुद्धिरपेक्षणीया किमुतान्यत्रेति वचनार्थः । तथापीति स्वरसाद् गर्भाष्टमयोरेकतरत्र गुरोः शुद्धौ लभ्यमानायामन्यत्र तदभावे

गुरुशुद्धेरादरः कर्तव्यः। उभयत्र गुरोरशुद्धौ गुरुशुद्धिमनादृत्यापि मुख्यकाल आदर्तव्यः।

तथा च नारदः—

बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः।
यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् ॥ ५८४ ॥

बालस्य मुख्यकाले शान्तिं कृत्वोपनयनं कार्यं न तु गुर्वशुद्धावनुक्तवत्सरे नवमादाविति वाक्यार्थः।

उक्तञ्च वशिष्ठेन—

तत्रापि वर्षे न बली गुरुश्चेच्छान्त्या प्रशस्तं व्रतबन्धकर्म।
अनुक्तवर्षेषु बलप्रदोऽपि नैवैतयोरब्दबलं बलीयः ॥ ५८५ ॥

अत्र वामवेधेन ये गुरुशुद्धिमाहुस्तान्दूषयति गर्गः—

मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः।
गोचरेणैव कर्तव्यं वेधादिकमकारणम् ॥ ५८६ ॥

तेन व्रतादौ गुरुशुद्धिर्गोचरेणैवापेक्ष्यते न तु वेधेन। अत्र गोचरशुद्ध्यभावे ऽष्टवर्गशुद्धिर्विचार्या।

यदाह राजमार्तण्डे—

अभावतो गोचरशोभनानां शुद्धिं वदेद्वागुरिरष्टवर्गात्।
वैधव्यकन्याक्षयहेतुयोगे जीवाष्टवर्गस्य वदेत्तु शुद्धिम् ॥ ५८७ ॥
अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु।
व्रतोद्वाहौ तु कर्तव्यौ गोचरेण कदापि न ॥ ५८८ ॥

इति वचनमष्टवर्गप्रशंसापरम्।

अष्टवर्गे तु ये शुद्धास्ते शुद्धाः सर्वकर्मसु।
सूक्ष्माष्टवर्गसंशुद्धिः स्थूलशुद्धिश्च गोचरे ॥ ५८९ ॥

इदमपि वचनं तत्परमेव।

अत्र प्रसङ्गतो गुरोरष्टवर्गो लिख्यते बृहज्जातके वराहेण—

दिक् स्वाद्यष्ट मदाय-बन्धुपुरुकुजात्स्वात्सत्रिकेष्वङ्गिराः
सूर्यात्सत्रिनवेषुधीस्वनवदिग्लाभारिगो भार्गवात्।
जायायार्थनवात्मजेषु हिमगोर्मन्दात्त्रिषड्धीव्यये
दिग्धीषट्स्वसुखायपूर्व्वनवगो वक्रात्स्मरस्वोदयात् ॥ ५९० ॥

अथ रवे—

स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो
वक्रात्स्वादिव तद्वदेव रविजाच्छुक्रात्स्मरान्त्यारिषु।

सौराद्भर्ममुतायशत्रुषु दशत्र्यायारिगः शीतगो-
स्त्वेष्वेवान्त्यतपःसुतेषु च बुधाद्वाग्नात्सबन्ध्यन्त्यगः ॥ ५९१ ॥

एवं जन्मकालीनमदवशादुक्तस्थाने रेखान्दशा साम्प्रतविदद्दस्लदावृष्टाधिष्ठितराशौ रेखाधिक्ये शुभमन्यथानेष्टमिति निष्कृष्यार्थः ।

उक्त च लघुजातके—

विफलं गोचरगणितं ह्यष्टकवर्गेण निर्दिष्टम् ।
रेखाधिक्ये शुभदं बिन्द्वधिके नैव शोभनं प्रायः ॥ ५९२ ॥

अथ प्रत्येकरेखाफलमुक्तं यवनाचार्येण—

कष्टं स्यादेकरेखायां द्वाभ्यामर्थक्षयो भवेत् ।
त्रिभिः क्लेशं विजानीयाच्चतुर्भिः समताफलम् ॥ ५९३ ॥
पञ्चभिः क्षेममारोग्यं षड्भिर्योगमो भवेत् ।
सप्तभिः परमानन्दस्त्वष्टाभिः सर्वसम्पदः ॥ ५९४ ॥

अथ रविशुद्धिः

श्रीपति—

लाभविक्रमखशत्रुषु स्थितः शोभनो निगदितो दिवाकरः ॥ ५९५ ॥

राजमार्तण्डे—

द्वितीयपुत्राङ्गगतः प्रभाकर-
त्रयोदशाहात्परमः शुभप्रदः ।
न जन्मसप्तव्ययबन्धुरन्ध्रगः
करोति पुंसां किल तादृशं फलम् ॥ ५९६ ॥

अन्यच्च—

भवति च पञ्चमनवमोपगतोऽपि हि भास्करः शुभदः ।
सति त्रयोदशदिवसात्परतो व्रतबन्धनादिषु ॥ ५९७ ॥

सारसमुच्चयेऽपि गुर्वादिग्रहशुद्धिः—

द्वितीये पञ्चमे जीवे नवमे सप्तमे शुभः ।
एकादशेऽथवा भानौ त्रिषष्ठैकादशगे खगे ॥ ५९८ ॥
द्वादशाष्टचतुर्थश्च शशी सर्वत्र वर्जयेत् ।
अन्यस्थश्च शुभः प्रोक्तो व्रतोद्वाहादिकर्मसु ॥ ५९९ ॥
तारासु शुभकर्मासु वर्जयेत्त्रिषु सप्तसु ।
जन्मभे व्रतबन्धश्च प्रशस्तं नात्र संशयः ॥ ६०० ॥

अथोपनयनाधिकारेऽनध्यायकथनम्।

शिशुबोधिन्याम्—

अनध्याये तिथौ दुःखी दुराचारोऽविदुर्गतः।
व्रतारम्भे शिशुर्नित्यमल्पायुश्च तथा भवेत् ॥ ६०१ ॥

सोमभट्टकृते बालोदये—

चतुर्दशोदयश्चैव प्रतिपदष्टमी तथा।
पक्षयोरुभयोरेव अनध्यायाष्टकं विदुः ॥ ६०२ ॥

मुहूर्तचिन्तामणौ—

सङ्क्रान्तियुगमन्वादौ द्वितीया ज्येष्ठशुक्लगा।
चैत्रकृष्णतृतीया च द्वादशी माघशुक्लगा ॥ ६०३ ॥
प्रतिपक्षेऽष्टमी चैव चतुर्दश्या दिनत्रयम्।
अनध्याया इमे वर्ज्याः स्वाध्याये व्रतबन्धनम् ॥ ६०४ ॥

स्मृतौ—

सिताज्येष्ठद्वितीया च आषाढदशमी सिता।
चतुर्थी द्वादशी माघे चैताः सोपपदाः स्मृताः ॥ ६०५ ॥

गौतमः—

पक्षद्वये चतुर्दश्योरष्टमीद्वितये तथा।
पक्षादावपि पक्षान्ते ब्रह्म नाधीयते नरैः ॥ ६०६ ॥

हारीतेन विशेष उक्तः—

प्रतिपत्सु चतुर्दश्या-मष्टम्यां पर्वणोर्द्वयोः।
श्वोनध्यायाद्यशर्वर्यां नाधीयीत कदाचन ॥ ६०७ ॥

श्वोनध्यायाद्यशर्वर्यामिति मन्वाद्यनध्यायविषयम्। चतुर्दश्यादिषु तत्पूर्वदिने प्रदोषसद्भावादेवाध्ययनाभावः ॥

फलं च ज्योतिःसागरे—

अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी।
अमावास्योभयं हन्ति प्रतिपत्पाठनाशिनी ॥ ६०८ ॥

महाभारते—

तदा यौधिष्ठिरी सेना गाङ्गेयशरपीडिता।
प्रतिपत्पाठशीलानां विद्येव तनुतां गता ॥ ६०९ ॥

वृद्धमनुः—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु।
अष्टकासु च संक्रान्तौ शयने बोधने हरेः ॥ ६१० ॥
अनध्यायं प्रकुर्वीत तथा सोपपदासु च ॥ ६११ ॥

चातुर्मास्यद्वितीया गर्गोक्ता —

आषाढफाल्गुनोर्ज्जेषु या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ता प्रवदन्ति महर्षयः ॥ ६१२ ॥

विधुक्षये = कृष्णपक्षे । कृष्णादि मासगणनया चैत्रश्रावणमार्गशीर्षमासीय कृष्णपक्षसम्बन्धिन्यो द्वितीयाश्चातुर्मास्यद्वितीया इत्यर्थः ।

अत्र पद्योक्तं वयाति सागरे—

चातुर्मास्यसमाप्तौ तु या द्वितीया भवेत्तु वा ।
सर्वास्वेतास्वनध्याया पुराणे परिकीर्त्तिता ॥ ६१३ ॥

चत्वारो मासाश्चातुर्मास्यमितियौगिकः शब्दः ।

सर्वसंग्रहे—

मार्गे च फाल्गुने चैव आषाढे कार्तिके तथा ।
पक्षयोर्मधुमासस्य द्वितीया परिवर्जयेत् ॥ ६१४ ॥

तथा—

कृष्णपक्षे द्वितीयायां भास्करे मृगकुम्भगे ।
सप्तम्याञ्च नवम्याञ्च गतायुव्रतबन्धनात् ॥ ६१५ ॥

राजमार्त्तण्डे—

आकाचैपौद्वितीयाया प्रेतपक्षे गता तु या ।
या च कोजागरे जाता चैत्रावल्या परे तु या ॥ ६१६ ॥
कार्तिकस्याश्विनस्यापि फाल्गुनाषाढयोरपि ।
द्वितीयायामनध्याय विश्वामित्रादयो जगुः ॥ ६१७ ॥

भुजबलभीमे—

प्रेतकानागरे चैव तथा तुर्ये च मासके ।
चैत्रकृष्णद्वितीयाया तिसृष्वेवाष्टकासु च ॥ ६१८ ॥
मार्गे च फाल्गुनाषाढे कार्तिके च सितेतरे ।
पक्षयोर्माघमासस्य द्वितीयायां च वर्जयेत् ॥ ६१९ ॥

अत्र श्रीपतिः —

कार्तिकस्याश्विनस्यापि फाल्गुनाषाढयोरपि ।
कृष्णपक्षे द्वितीयायामनध्याय विदुर्बुधाः ॥ ६२० ॥
मार्गे च फाल्गुने चैव आषाढे कार्तिके तथा ।
पक्षयोर्माघमासस्य द्वितीया परिवर्जयेत् ॥ ६२१ ॥

अष्टकासूक्ताः स्मृतौ—

पौषादित्रिषु मासेषु कृष्णे चैवाष्टकात्रयम् ।
एका ज्ञेयाश्विने मासि ह्यायने चतुरष्टकाः ॥ ६२२ ॥
अष्टका च समुद्दिष्टा सप्तम्यादिदिनत्रयम् ।
नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत् ॥ ६२३ ॥

नारदः—

द्वादश्यूर्जे शुक्लपक्षे नवम्याश्वयुजे सिते ।
चैत्रभाद्रपदे चैव तृतीया शुक्लसंज्ञिता ॥ ६२४ ॥
एकादशी सिता पौषेऽप्याषाढे दशमी सिता ।
माघे च सप्तमी शुक्ला नभस्येऽथ सिताष्टमी ॥ ६२५ ॥
श्रावणे मास्यमावस्या फाल्गुने मासि पूर्णिमा ।
आषाढे कार्तिके मासि चैत्रो ज्यैष्ठस्य पूर्णिमा ।
मन्वादयः स्नानदानश्राद्धेष्वनन्तपुण्यदाः ॥ ६२६ ॥

मत्स्यपुराणेऽपि—

आश्वयुक् शुक्लनवमी कार्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ ६२७ ॥
श्रावणस्य त्वमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ ६२८ ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनो चैत्रो ज्यैष्ठो पञ्चदशी सिता ॥ ६२९ ॥
मन्वन्तरादयश्चैते दशाम्यक्षयकारकाः ॥ ६३० ॥

अत्र नारदवाक्यं 'नभस्येथ सिताष्टमी' इति तत्कृष्णादिमासाभिप्रायेण, मत्स्यपुराणवचनन्तु श्रावणस्याष्टमीकृष्णेति, तच्छुक्लादिमासाभिप्रायेण । एवं सति जन्माष्टमी सिद्धा । उभयमतेऽमावास्या शुक्लादिमासाभिप्रायेण जन्माष्टम्यनन्तरभाविनी गृह्यते ।

अथ युगादिः, नारदः—

कार्तिके शुक्लनवमी आदिः कृतयुगस्य च ।
त्रेतादिर्माघवे शुक्ला तृतीया पुण्यसंज्ञिता ॥ ६३१ ॥
कृष्णा पञ्चदशी माघे द्वापरादिरुदीरिता ।
कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥ ६३२ ॥

उशनाः—

अयने विषुवे चैव बोधने शयने हरेः ।
अनर्घ्यार्घं प्रकुर्वीत मन्वादिषु युगादिषु ॥ ६३३ ॥

अन्यत्र—

अयं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु।
उपाकर्मणि चोत्सर्गे स्वशाखे श्रोत्रिये मृते॥ ६३४॥

ज्योतिःसारे—

संक्रान्तौ तरणे कुलग्रहदिने नित्यं प्रसुप्ते हरौ
मन्वादावखिले युगादिषु तथाऽनध्यायपापांशयोः।
नो कुर्वतबन्धनं ग्रहणभे केतूदये भार्गवे
जीवे नीचविनीशशीशिनोः सन्ध्याम्बुदे गर्जिते॥ ६३५॥

मुहूर्तचिन्तामणौ—

कृष्णे प्रदोषेऽनध्याये शनौ, निश्यपराह्णके।
प्राक् सन्ध्यागर्जिते, नष्टो व्रतबन्धो गलग्रहे॥ ६३६॥

वशिष्ठः—

प्रतेह्नि पूर्वसन्ध्यायां वारिदो यदि गर्ज्जति।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्ज्जयेत्॥ ६३७॥

सन्ध्यालक्षणं तु मुहूर्तचिन्तामणौ—

सन्ध्या त्रिनाडीप्रमितार्कबिम्बादर्द्धोदितास्तादध ऊर्ध्वमत्र इति।६३८॥

गलग्रहानाह गुरुः—

त्रयोदश्यादिचत्वारि सप्तम्यादि दिनत्रयम्।
चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः॥ ६३९॥
सप्तमी चाष्टमीविद्धा त्रयोदश्या चतुर्दशी।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम्॥ ६४०॥
आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम्॥ ६४१॥

अथ दैवज्ञमनोहरे—

प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे।
मधुं विनोपनीतश्च पुनः, संस्कारमर्हति॥ ६४२॥

ज्योतिर्मनुः—

अनध्यायोपनीतस्तु, पुनः संस्कारमर्हति।
गलग्रहे प्रदोषे, च स्वल्पायुरुपजायते॥ ६४३॥

मनुः—

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम्।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे ,च गर्हितम्॥ ६४४॥

विद्यारम्भो व्रतोद्देशः क्षौरञ्चैव विशेषतः ।
गलग्रहे न कर्तव्य यदीच्छेत्पुत्रजीवितम् ॥ ६४५ ॥
चूडां व्रतं तथोद्वाह कर्णयोरपि वेधनम् ।
गलग्रहे न कर्तव्य यदीच्छेत्पुत्रजीवितम् ॥ ६४६ ॥

गर्गः—

चतुर्थी याममेकन्तु सार्धयामं च सप्तमी ।
अर्धरात्रं त्रयोदश्या प्रदोषो रजनीमुखम् ॥ ६४७ ॥
अत्र नाध्यापयेद्वेद वेदाङ्गानि च सर्वथा ।
अत्राध्ययनशीलस्य प्रदोषः सर्वघातकः ॥ ६४८ ॥

गोभिलेनाप्येवमुक्तम्—

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका ॥
प्रदोषमिह कुर्वीत तृतीया नवनाडिका ॥ ६४९ ॥

स्मृत्यर्थसारेऽपि—

चतुर्थ्याः पूर्वरात्रे तु नवनाड्यां प्रदर्शने ।
नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥
अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रिके ॥ ६५० ॥

एतदेतयोः पक्षयोर्देशाचारतो व्यवस्थेति ।

गोभिलः—

रात्रौ यामद्वयादर्वाग्यदि पश्येत् त्रयोदशीम् ।
प्रदोषः स तु विज्ञेयो गर्हितः सर्वकर्मसु ॥ ६५१ ॥

इत्यादिवचनादिदि प्रतीतिर्जायते यदि सूर्यास्तात्प्रहररात्रिपर्यन्तं चतुर्थी-प्रवृत्तिः सार्द्धप्रहरे सप्तम्याः प्रवृत्तिः अर्धरात्रौ त्रयोदश्याः प्रवृत्तिस्तदा प्रदोषः, स तु पठनपाठनेऽतिनिन्दित इति शिवम् ।

सोमभट्टः—

चतुर्थ्यां याममेकन्तु सप्तम्याः सार्द्धयामकम् ।
यामद्वयं त्रयोदश्याः प्रदोषः प्रोच्यते बुधैः ॥ ६५२ ॥

शार्ङ्गधरे—

स्वाध्याये पूर्वाह्णे प्रदोषरहिते तिथावरिक्ते ।
हित्वा शनिकुजवारौ स्वाध्याये पूर्वपरदिवसे वा ॥ ६५३ ॥

हरदत्तः—

पौषादिचतुरो मासान् ज्ञेया वृष्टिरकालजा ।
व्रतयात्राविवाहादौ वर्ज्जयेत्सप्तवासरान् ॥ ६५४ ॥

अत्र पौषादय शुक्रादिचान्द्रा माघा उत्सर्गिकत्वात्—

एकैकैकदिन त्याज्यं द्वितीयेन दिनत्रयम्।
तृतीयेन तु सप्ताह त्यजेद्याकालवर्षणे ॥ ६५५ ॥
वृत्तेष्यकालवर्षे ना शुद्धिं निर्दिशेत्तावत्।
यावन्न भवति याने नरपशुचरणाङ्किता वसुधा ॥ ६५६ ॥

आवश्यके कर्मणि पौषमाघयोरेव वृष्टिकाल इति। वर्षेण दिन तु दण्डापूपन्यायात्सिद्ध दण्डेनापूर्पं स्पृशति तद्व अत्रादित्यत्र दण्डस्पृष्टत्वापूपस्य त्याज्यत्वेन दण्डस्य सुतरामेव त्याज्यत्वमिति कैमुतिकन्यायेन दण्डापूपन्याय। येद्यास्तेत्यादिः। अतिवृष्टिरविच्छिन्न वर्षणम्।

श्रीपति —

पयोधरैश्छन्नतर खमण्डल दिवानिश या व्रतबन्धवासरे।
प्रभातसन्ध्यासमये च गर्जित तदा ह्यनध्यायमुशन्ति सन्त ॥ ६५७ ॥

दिवानिशमिति व्रतबन्धसमयात्प्रागियर्थ। उदीच्यवर्षविच्छेदाविच्छेदयोर्श तुमशक्यत्वात्।

अत्र केचित्—

मार्गोन्मासात्प्रभृतिमुनयो व्यासवाल्मीकिगर्गा
श्चैत्र यावद्वपनविधौ नातिकालं वदन्ति।
नाडीजघ सुरगुरुमुनि प्राह वृष्टेरकाल
श्रासावेतावशुभफलदौ पौषमाघौ न शेषौ ॥ ६५८ ॥
नाडीजङ्घ। एकेन वर्षेण द्वितीयमेकमहस्त्याज्यमित्यर्थः—

श्रीपति —

यदाम्बुवृष्टि कुलिश पतत्यथ धराप्रकम्पोऽम्बरकेतुदर्शनम्।
तदा विवाहो व्रतबन्धनञ्च विवर्जयेत्सप्तदिनानि शास्त्रत ॥ ६५९ ॥
ग्रहणादिसूतकमुक्त त्याज्यप्रकरणे अन्यत्र विशेषे बृहस्पति —
दिग्दाहे दिनमेकं स्याद् ग्रहणे सप्तवासरान्।
भूमिकम्पे समुत्पन्ने अहानि परिवर्ज्जयेत्॥ ६६० ॥
उल्कापाते त्रिदिवस धूमे पञ्च दिनानि च।
वज्रपाते दिनैकन्तु वर्जयेत्सर्वकर्मसु ॥ ६६१ ॥

हरदत्त —

दर्शनादर्शनाद्राहुकेत्वो सप्त दिन त्यजेत्।
यावत्केतूदयस्तावदशुद्ध समयो भवेत् ॥ ६६२ ॥

—राजमार्तण्डे—

वसन्तसमये यज्वा अब्दे गर्भाष्टमेपि वा।
मेधावी मेखलाबन्धे जन्ममासेथ जन्मभे ॥ ६६३ ॥

यज्वा वसन्तसमये बहु वित्तभागी
गर्भाष्टमे विविधशास्त्रविशारदस्तु।
वेदार्थ पालनपर खलु जन्ममासे
ऋक्षेपि जन्मनि बहुक्रतुभाजन स्यात् ॥ ६६४ ॥

जन्मोदये जन्मसु तारकासु
मासेथ वा जन्मनि जन्मचन्द्रे।
व्रतेन विप्रोप्यबहुश्रुतो वा
प्रज्ञाविशेषैः प्रथित पृथिव्याम् ॥ ६६५ ॥

गर्भाष्टमे गर्गपराशराद्यै फल यदुक्त व्रतबन्धने तु।
ततोधिक जन्मसु तारकासु मासेथवा जन्मनि मानवानाम् ॥६६६॥

वृद्धगर्गः —

शाखाधिपे बलिनि केन्द्रगते च मौञ्जी
बन्धस्तदीय दिवसेषु शुभाय बलन।
अस्मिन् बलेन रहिते तु पुनर्द्विजाना
स्याद् वर्णसकर इति प्रवदन्ति तज्ज्ञा ॥ ६६७ ॥

बृहस्पति —

गोचराष्टक वर्गाभ्या गुरुशुद्धिर्न लभ्यते।
तदोपनयन कार्यं चैत्रमीनगते रवौ ॥ ६६८ ॥

धर्मबोधे—

ज्येष्ठे मासि विशेषेण सर्वज्येष्ठस्य चैव हि।
उपवीतस्य पुत्रस्य जडत्व मृत्युरेव च ॥ ६६९ ॥

मदनरत्ने—

पितु सूर्यबल श्रेष्ठ शाखावर्णेशयोर्वटोः।
सर्वेषा गुरुचन्द्रर्क्ष बल श्रेष्ठ व्रतादिषु ॥ ६७० ॥

व्यास —

ऋगथर्वसामयजुषामधिपा गुरुसौम्यसिता
जीवसितौ विप्राणा क्षत्रियस्यारोष्णगू विशाञ्चन्द्र ॥ ६७१ ॥
शूद्राधिप शशिसुत शनैश्चर सङ्करप्रभवाणाम्।

ऋतुनिर्णयमाह गर्गः —

विप्र वसन्ते क्षितिप निदाघे वैश्य घनान्ते व्रतिन विदध्यात् ।
माघादिशुक्रान्तिकपञ्चमासाः साधारणा वा सकलद्विजानाम् ॥६७२॥

कालविधाने—

शुक्ले पक्षे निर्मले शीतभानौ शुक्रे जीवे चाम्बरे दृश्यमाने ।
शाखाधीशे शक्तियुक्तेऽनुकूले राशौचर्क्षे स्याच्छिशोर्मौञ्जिबन्धः ॥६७३॥

वशिष्ठः —

विधातृगौरीफणिषण्मुखेन्द्रयमाः सकामास्तिथयः प्रशस्ताः ।
मध्येऽर्करुद्रेपि च ते प्रशस्ते सुहृत्सुतुङ्गर्क्षगते शशाङ्के ॥६७४॥
त्यक्त्वा चतुर्थीमपि कृष्णपक्षे त्वाद्य त्रिभाग शुभदं व्रते च ।
शस्ता सिते ज्येन्दुजवासरास्ते रवीन्दुवारौ खलु मध्यमौ तौ ॥६७५॥

विधाता द्वितीया, गौरी ३, फणिः ५ षण्मुखः ६, इन्द्र ७, यमः ४, काम १३, अर्कः १२, रुद्र ११ ।

व्यास —

या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यपि फाल्गुनस्य ।
कृष्ण तृतीयोपनयप्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यै ॥ ६७६ ॥

लल्ल —

व्रतेह्नि पूर्वसन्ध्याया वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रत तत्र विवर्जयेत् ॥ ६७७ ॥

बृहस्पति —

बह्वृचाना गुरोर्वारे यजुर्वेदजुषा बुधे ।
सामगाना धरासूनोरथर्वविदुषा रवौ ॥ ६७८ ॥

मदनरत्ने—

पापग्रहाणा वारा स्युः शुभाश्चन्द्रवासरे ।
सिते पक्षे प्रशस्त स्यात्कृष्णे वारो विधोर्नहि ॥
शुभो बुधो नास्तु मित पापग्रहयुतो न वा ॥ ६७९ ॥

बृहस्पतिः—

त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ॥ ६८० ॥
त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तम ह्युपनायनम् ।
वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा ॥ ६८१ ॥

अश्विन्यां षट्सु मैपूर्क मध्यमं व्रतबन्धनम् ।
शेषेषु वर्जयेद् विद्वान् द्विजानामुपनायनम् ॥ ६८२ ॥

'द्विजानामित्युपलक्षणं क्षत्रियादीनामपि कार्यम् ।

चण्डेश्वरः—

सार्पे विशाखापितृपूर्वभाद्ररौद्र कृशानुर्जलमुत्तरासु ।
यास्यन्द्विजानां व्रतबन्धने तु मृतिभवेत्पूर्वमुनिप्रवादः ॥६८३॥

एतेषां मध्ये केषाञ्चित्तद्वेदाध्ययनविषयत्वेन व्यवस्था ज्योतिर्निबन्धे प्रोक्ता ।

मूले हस्तत्रये सार्पे शैवपूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥ ६८४ ॥
पुष्ये पुनर्वसौ पौष्णे हये मैत्रशशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद्यजुषा मौञ्जिबन्धनम् ॥ ६८५ ॥
पुष्यवासवहस्ताश्विशिवर्क्षे चोत्तरात्रये ।
प्रशस्तं मेखलाबन्धे वटूनां सामगायिनाम् ॥ ६८६ ॥
मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्वपाठिनां शस्तं भगणोयं व्रतार्पणे ॥ ६८७ ॥

व्यवहारनिबन्धे—

हस्तत्रयं श्रवणसार्पशिवर्क्षपूर्वा-
मूलेषु बह्वृचवटूपनयः प्रशस्तः ।
विष्यादितिद्रुहिणसूर्यशशाङ्कपौष्ण-
मैत्रोत्तरासु यजुषां रसनानिबन्धः ॥ ६८८ ॥
'विश्वाश्विविष्यशिवविष्णुवरोत्तरासु
यक्षार्यदो व्रतविधिः खलु सामगानाम् ।
शशाङ्कहस्तत्रिपुनर्वसौ च
पुष्याश्विभेऽथर्ववदो विधिश्च ॥ ६८९ ॥

ब्राह्मणस्य पुनर्वसुनिषेधमाह राजमार्तण्डे—

ताराचन्द्रानुकूलेषु महाद्देषु शुभेष्वपि ।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥ ६९० ॥

अन्यत्राऽपि स्मर्यते—

व्यहस्पृशि मळे मासि शूद्रत्वमधिगच्छति ।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥ ६९१ ॥

इत्यत्र विप्र॰ कृत इति पदद्वयोपादानेनैवरयो क्षत्रियविशोः पुनर्वसौ मवबन्धो नाप्रयस्त इत्यर्थः। पुनर्वसुनक्षत्रविषयकव्रतबन्धस्यैव सामान्यतो निषेधोक्तेर्विशेषवचनाद् ब्राह्मणे एव निषेधः पर्यवसन्न एकवाक्यताबलात्। अयञ्चाचारो मैथिलादिप्राच्यानामेव। दाक्षिणात्यास्त्वेतद्दोषवचनं नाङ्गीकुर्वते देशाचाराभावात्।

उक्तं च वराहेण—

देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या।
लोके दुष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥६९२॥

विद्यापतिठक्कुरकृतज्योतिषदर्पणे—

व्यहस्पृशं नाम यदेतदुक्तं तत्र प्रयत्नः कृतिभिर्विधेयः।
विवाहयात्राव्रतपौष्टिकेषु शुभं विनष्टं त्रिदिनस्पृशेषु ॥ ६९३ ॥

अत्र विहितनक्षत्रेऽपि वधादिदोषा त्याज्याः।

तदुक्तं दीपिकायाम्—

कर्णवेधे विवाहे च व्रते पुंसवने तथा।
प्राशने चाद्यचूडायां विद्धमृक्षं परित्यजेत् ॥ ६९४ ॥

अत्र वेधः सप्तशलाकाचक्रस्थो द्रष्टव्यः।

तदाह वशिष्ठ —

पञ्चशलाकाचक्रे पाणिग्रहणे तु वेधविधिरुक्तः।
शस्तः शुभमिश्रकृतः सप्तशलाका तदितरत्र ॥ ६९५ ॥

इतरत्र यज्ञोपवीतचौलान्नप्राशनसीमन्तादिषु इत्यर्थः।

चक्रन्यासः स्वरोदये—

तिर्य्यगूर्ध्वंगता रेखा सप्त सङ्ख्या लिखेद् बुधः।
कृत्तिकादीनि भान्यत्र साभिजिन्ति क्रमेण च ॥ ६९६ ॥
भुक्तं भोग्यन्तथाक्रान्तं विद्धं पापग्रहेण च।
शुभाशुभेषु कार्य्येषु वर्ज्जनीयं प्रयत्नतः ॥ ६९७ ॥
यस्याभिधाननक्षत्रं विद्धं क्रूरग्रहेण च।
देशो ग्रामः पुरं सैन्यं नरो नारी विनश्यति ॥ ६९८ ॥

अथ लग्नफलं कश्यपः—

भास्करो लग्नगः कुर्य्याद्दुः भूपतिसेवकम्।
वसुस्थः स्वर्णरहितं मातृस्थः सुखिनं सदा ॥ ६९९ ॥
बन्धुगो दुःखितं नित्यं सुतगो मतिवर्जितम्।
शत्रुगो रागरहितं सप्तमे कुलवर्जितम् ॥ ७०० ॥

अष्टमे दृष्टिरहितं नवमे धर्महारिणम् ।
व्यापारगो भिक्षवृत्तिं दीर्घायुष्यं तथायगः ॥ ७०१ ॥
रिष्फगो हानियुक्तश्च फलमेतद् घटोरपि ।
सिते चन्द्रे लग्नसंस्थे शुभं स्यादसिते शुभम् ॥ ७०२ ॥
वसुगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः ।
चतुर्थे बुद्धिवैशिष्ट्यपञ्चमे सुखमुत्तमम् ॥ ७०३ ॥
षष्ठे तु व्याधिपीडा स्यात् सप्तमे सुखसङ्गतिः ।
अष्टमे निधनप्राप्तिर्नवमे धर्मसञ्चयः ॥ ७०४ ॥
दशमे स्यात्सदाचारो लाभे स्याद् धनसंग्रहः ।
दारिद्र्यं रिष्फगे विद्याच्चान्द्रं फलमुदाहृतम् ॥ ७०५ ॥
मृतिर्नाशः सुखं काणो हानिर्वृद्धिर्मृतिः क्षुदः ।
अधर्मो दुर्मतिर्वृद्धिर्नाशो लग्नात्कुजे फलम् ॥ ७०६ ॥
बुद्धिवृद्धिवित्तनाशो लाभः पुत्रो मृतिः सुखम् ।
आयुः क्षयो धर्मसौख्ये कोशलाभः क्षयः क्रमात् ॥ ७०७ ॥
सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम् ।
षष्ठाष्टमे विना जीवः सर्वतः शुभकृत्सदा ॥ ७०८ ॥
सर्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना ।
निन्दां हानिं सुखं रोगं धर्मं कामं सह मृतिम् ।
विपत्क्लेशं सुखं मृत्युमुदयात्कुरुते शनिः ॥ ७०९ ॥

गर्गः—

सौरवच्च फलं दद्याद्राहुः किन्त्वष्टमे हितः ।
नवमे व्यस्तफलदो द्वितीये दानदायकः ॥ ७१० ॥

मत्स्यन्ये प्रत्येकलग्नफलमाह अगन्मोहने वशिष्ठः—

मेषे भवति वाक्कुण्ठो वित्तविद्यायुतो वृषे ।
युग्मे वेदान्तदर्शी च कुलीरे च षडङ्गवित् ॥ ७११ ॥
शिल्पकर्मकरः सिंहे षष्ठे भवति पण्डितः ।
तुलायां वणिजः प्राप्तिः काण्डपृष्ठस्तु वृश्चिके ॥ ७१२ ॥

कायस्थः धारसजीवी ।

सर्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा ।
राजप्रेष्यो भवेत्कुम्भे मीने वेदान्तपारगः ॥ ७१३ ॥

नारद—

त्रिषडायगतैः पापैः षडष्टान्त्यविवर्जितैः ।
शुभैः षष्ठाष्टलग्नान्त्यवर्जितेन हिमांशुना ॥ ७१४ ॥

दैवज्ञमनोहरे गुरुः—

लग्ने स्थितेषु रन्ध्रे च पापेषु मरणं बटोः।
सौख्यं स्यात् त्रिषडायेषु जडत्वमितरेषु च ॥ ७१५ ॥
चन्द्रक्रूरास्तनौ नेष्टाःसर्वरन्ध्रेऽव्यये कविः।
सितेन्दुलग्नपाः षष्ठे मौञ्जाविद्यादिकर्मसु ॥ ७१६ ॥

रव्यादिफलं मुहूर्तचिन्तामणौ—

क्रूरो जडो भवेत्पापः पटुः षटकर्मकृद्वटुः।
यज्ञार्थभुक्तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥ ७१७ ॥
विद्यानिरतः शुभगांशिलवे पापांशगते हि दरिद्रतरः।
चन्द्रे स्वल यद्दुःखयुत कर्णादितिभेदेधनवान् स्वलवे ॥ ७१८ ॥

षट्कर्मोक्तं व्यासेन—

यजनं याजनञ्चैव तथा दानप्रतिग्रहौ।
अध्यापनमध्ययनं षट्कर्मधर्मभाग् द्विजः ॥ ७१९ ॥

कश्यपः—

शुभग्रहांशगे चन्द्रे विद्यावान्धनवान् व्रती।
तस्मिन्पापांशसंस्थेऽतिनिर्धनोऽखिलदोषभाक् ॥ ७२० ॥
स्वांशसंस्थे निशानाथे दरिद्रः खलु दुर्जनः ॥ ७२१ ॥

वशिष्ठेन प्रत्येकं फलमुक्तम्—

सूर्यांशकगते चन्द्रे महापातककृद्व्रती।
पुण्योपसेवी स्वांशस्थो नीचाशयः खलः सदा ॥७२२॥
कुजांशकगते चन्द्रे शस्त्रजीवी खलो व्रती।
बुधांशकगते चन्द्रे वेदवादी भवेद् वटुः ॥ ७२३ ॥
जीवांशकगते चन्द्रे साङ्गवेदविशारदः।
शुक्रांशके धनी दाता विद्यावृत्तविशारदः ॥ ७२४ ॥
क्षिप्रोद्वाही यज्ञकृतयात् सत्रयी भोगभाग् भवेत्।
सौरांशकगते चन्द्रे सदा चाण्डालसेवकः ॥ ७२५ ॥

नारदः—

श्रवणादित्रिनक्षत्रे कर्कांशस्थे निशाकरे।
तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ॥ ७२६ ॥

वशिष्ठः—

न नैधनं नैधनशुद्धिलग्नं न नैधनर्क्षं न च तन्नवांशः।
न नैधनेशो न तदंशको वा लग्ने प्रशस्ते न च रात्रिनाथः ॥७२७॥

मासफलमुक्तं बालोदये सोमभट्टः

माघे मासि महाधनो धनपतिः प्राज्ञो धनी फाल्गुने
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।
वैशाखे सुभगः सुखी पटुमतिर्ज्येष्ठे बलिष्ठो बुधो-
ऽप्याषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः ॥७२८॥

नृसिंहप्रसादे—

ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत् ।
तदा विघ्नकरं ज्ञेयं वटोरध्ययनस्य तत् ॥ ७२९ ॥
तस्य शान्तिप्रकारन्तु वक्ष्ये शास्त्रानुसारतः ।
स्वस्तिवाचनपूर्वन्तु हवनं कारयेद् बुधः ॥ ७३० ॥
प्रधानं पायसं साज्यं द्रव्यं शान्तियुजो भवेत् ।
सूक्तं बृहस्पतेर्विद्वान् पठेत् प्रज्ञाविवर्द्धये ॥ ७३१ ॥
गायत्री युज्यते मन्त्रः प्रायश्चित्तन्तु सर्पिषा ।
धेनुं सवत्सकान् दद्यादाचार्याय पयस्विनीम् ॥ ७३२ ॥
शिलां होमविधेः पश्चात् स्थापयेत्तत्र संमदि ।
ब्राह्मणान्भोजयेत् पश्चात्ततो ब्रह्मादनञ्चरेत् ॥ ७३३ ॥

अथ धर्मशास्त्रीयं विशेषमाह रामः—

नान्दीश्राद्धोत्तरं मातुः पुष्पं लग्नान्तरेण हि ।
शान्त्या चौलं व्रतं पाणिग्रहः कार्योऽन्यथा न सत् ॥ ७३४ ॥

अन्यच्च—

चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ ७३५ ॥
वधूवरान्यतरयोर्जननी चेद् रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥ ७३६ ॥

वृद्धमनुरपि—

विवाहे व्रतचूडासु यदि माता रजस्वला ।
तदा न तत् प्रकर्त्तव्यमायुःक्षयकरं यतः ॥ ७३७ ॥

बृहस्पतिः—

वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायाञ्च शिशोर्मृत्युर्विघ्नं यागप्रवेशयोः ॥ ७३८ ॥

रजोविषयमेतज्ज्ञेयम् प्रचेता —

प्राप्य चाभ्युदयश्राद्ध पुत्रसंस्कारकर्मणि ।
पत्नी रजस्वला जाता न कुर्यात्तत्पिता तदा ॥ ७३९ ॥

शान्तिप्रकाशे वाक्यसारे—

अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ॥ ७४० ॥
हैमीं माषमितां पद्मं श्रीसूक्तविधिनार्चयेत् ।
प्रत्यृचं पायसं हुत्वाऽभिषिच्य हितमाचरेत् ॥ ७४१ ॥

अस्यापवादस्तत्रैव—

उपवासेन शुद्ध्यन्ति नार्यः सद्यो रजस्वलाः ।
एकाकिन्यो विवाहादौ देशभङ्गेषु चापदि ॥ ७४२ ॥

अथ विद्यारम्भः ।

सोमभट्टबालोदये—

विद्यया क्षीयते पापं विद्यायुण्यं प्रवर्धते ।
विद्यया सर्वसिद्धिः स्याद् विद्ययामृतमाप्यते ॥ ७४३ ॥
द्वितीयजन्मतः पूर्वमक्षराणि समारभेत् ।
मौञ्जीबन्धं ततः पश्चाद्वेदारम्भो विधीयते ॥ ७४४ ॥
प्रारम्भे सर्वविद्यानामनध्यायं विवर्जयेत् ।
नष्टं विधुञ्च विबलं लग्नं क्षीणं विधुस्तथा ॥ ७४५ ॥
हस्तात्त्रिके त्रिके कर्णात् पूर्वासु मृगपञ्चके ।
मूलाश्विमैत्रपौष्णेषु मुखसंस्कार इष्यते ॥ ७४६ ॥

मदनरत्ने—

उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ।
पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ॥ ७४७ ॥

दीपिकायाम्—

लघुचरशिवमूलाधोमुखं त्वाष्ट्रपौष्णं
शशिशुचिहरिबोधे शुक्रजीवार्कवारे ।
उदितवति हि जीवे चन्द्रकोणेषु सौम्ये
क्षपठनदिनवर्जं पाठयेत् पञ्चमाद्दे ॥ ७४८ ॥
विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ रविभार्गवौ ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः ॥ ७४९ ॥

बृहस्पतिः—

प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीभिः प्रपूजयेत् ॥ ७५० ॥
यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसिद्ध्यति ।
तत्प्रसादेन यस्मात्स प्राप्नुते सर्वसम्पदम् ॥ ७५१ ॥

श्रीपतिः —

मृगादिपञ्चस्वपि भेषु मूले हस्तादिके च त्रितयेऽश्विनीषु ।
पूर्वात्रये च श्रवणात्रये च विद्यासमारम्भमुशन्ति सिद्ध्यै ॥ ७५२ ॥

तत्स्पष्टमुक्तं महेश्वरेण—

हस्तादित्रितये तथा निर्ऋतिभे पूर्वान्त्यभेष्वश्विनी
मित्रर्क्षे च मृगादिपञ्चसु शुभः प्रारम्भ आद्यः स्मृतः ।
विद्यानां हरिभात्रये च दिवसे सूर्येभृगोर्वा विदो-
ऽनध्यायाद्यवदाद्यवर्जिततिथौ केन्द्रस्थितैः सद्ग्रहैः ॥७५३॥

श्रीधरीये—

रिक्ताष्टमी पञ्चदशी निषिद्धा त्रयोदशी सप्तमिका च मध्या ।
विद्यागमे वित्सितमन्त्रिणायन्पूर्वाह्णयामद्वयमिन्दुभान्वोः ॥७५४॥

अनध्यायो व्रतबन्धे उक्तः ।

अथ समावर्तनम्

वसिष्ठः—

अधीत्य वेदांश्च तदर्थशास्त्राण्यभ्यस्य लब्ध्वा च गुरोरनुज्ञाम् ।
कुर्यात्समावर्तनकर्म्म पश्चाद्दानात्ततः पाणिनिपीडनात्प्राक् ॥७५५॥

महेश्वरः—

विभौमभानुजे वारे प्रवोर्क्यादिनसादिषु ।
चन्द्रताराविशुद्धौ च स्यात्समावर्तनक्रिया ॥ ७५६ ॥

श्रीधरीये—

वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणी-
गोविन्देषु शशाङ्कभानुगुरुविच्छुक्रांशवारादिषु ।
रिक्ता पर्व तथाष्टमीं प्रतिपदं मेषञ्च कीटं हरिं
हित्वा शुद्धियुतेष्टमेहि विमले कुर्यात्समावर्तनम् ॥ ७५७ ॥

राजमार्तण्डे—

क्षुरकर्म्मणि प्रदिष्टं यदोष्टफलदायकं दिनाद्यन्तु ।
तन्मेखलाविमोक्षे भवति हिताय द्विजातीनाम् ॥ ७५८ ॥

निबन्धे—

केशान्त षोडशे वर्षे कुर्याच्चौलोक्तमादिके ।
गुरुशुद्धिं विना काले व्रतोक्तमनमोक्षणम् ॥ ७५९ ॥

ग्रन्थान्तरे—

वधूप्रवेशं व्रतमोक्षणञ्च
पुनः पुनर्दारपरिग्रहञ्च ।
नाब्दे द्वितीये विदधीत धीमान्
वदन्ति गर्गात्रिवसिष्ठमुख्याः ॥ ७६०

रामः—

केशान्तं षोडशे वर्षे चौलोक्तदिवसे शुभम् ।
व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥ ७६१ ॥

आश्वलायन —

प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम् ।
तृतीयं स्यादुपनिषद् गोदानाख्यन्ततः परम् ॥ ७६२ ॥

अथ क्षुरिकाबन्धनम्—

क्षुरिकाबन्धनं वक्ष्ये नृपाणां प्राग्विवाहतः ।
विवाहोक्तेषु मासेषु शुक्लपक्षे च नास्तगे ॥ ७६३ ॥
जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते ।
मौञ्जीबन्धनऋक्षेषु कुजवर्जितवासरे ॥ ७६४ ॥
व्रतलग्नोदये कर्तुरष्टमोदयवर्जिते ।
धनत्रिकोणगैः सौम्यैः पापैर्भवरिपुत्रिगैः ।
क्षुरिकाबन्धन कार्यमर्चयित्वा सुरान्पितॄन् ॥ ७६५ ॥

अथ विवाहः

कश्यपः—

अथातः सम्मवक्ष्यामि गृहस्थाश्रममुत्तमम् ।
य आधारोन्याश्रमाणां भूताना प्राणिनान्तथा ॥ ७६६ ॥
ऋणत्रयच्छेदकारो धर्मकामार्थसिद्धिदा ।
एतत्सर्वस्थित स्त्रीषु शीलवृत्तान्वितासु च ॥ ७६७ ॥

तच्छीलवृत्तिलब्धिस्तु सुलग्नवशतो भवेत्।
तस्मात् सम्यग्लग्नशुद्धिं प्रवक्ष्याम्यनुपूर्वशः ॥ ७६८ ॥

विवाहा अष्टौ उक्ता मनुना—

चतुर्णामपि वर्णानां प्रेत्य चेह हिताऽहितान्।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥ ७६९ ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ ७७० ॥

एषां लक्षणान्याह याज्ञवल्क्यः —

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ७७१ ॥
यज्ञस्थायर्त्विजे दैव आदायार्षस्तु गोद्वयम्।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ७७२ ॥
सहोभौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने।
स कायः पावयेत्तज्जः षट् षड् वंश्यान्सहात्मना ॥ ७७३ ॥
आसुरो द्रविणादानाद् गान्धर्वः समयान्मिथः।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥ ७७४ ॥

कायः प्राजापत्यः। कन्यकाच्छलात्—कन्यावञ्चनात्।

एषां कालनियममाह नारदः—

प्राजापत्यब्राह्मदैवविवाहा ऋषिसञ्ज्ञकाः।
उक्तकालेषु कर्तव्याश्चत्वारः फलदायकाः।
गान्धर्वासुरपैशाच-राक्षसाख्याश्च सर्वदा ॥ ७७५ ॥

तत्रादौ वर्षनिषेधः, ज्योतिर्निबन्धे—

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः।
सोमो भुंक्ते ततस्तद्वद् गन्धर्वश्च तथानलः ॥ ७७६ ॥

इत्यस्य व्याख्यानं जन्मान्तरं वर्षद्वयं सोमो भुंक्ते तदनन्तरं द्वे वर्षे गन्धर्वस्तदनन्तरं द्वे वर्षेऽग्निस्ततो मनुष्याधिकार इति षडब्दतः प्राग्विवाहो न कार्य इति।

तथा चोक्तं श्रुतौ—

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः।
तृतीयोऽग्निष्टे पतिस्तुरीयास्ते मनुष्यजाः ॥ ७७७ ॥
सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ७७८ ॥

अत्र षड्वर्षान्तर समवर्षे विवाह शुभ ।

यदाह नारद —

युग्मेऽब्दे जन्मत स्त्रीणा शुभद पाणिपीडनम् ।
एत पुसामयुग्माब्दे व्यत्यये नाशनन्तयो ॥ ७७९ ॥

कश्यपोपि—

विवाहो जन्मत स्त्रीणा युग्मेऽब्दे पुत्रपौत्रद ।
अयुग्मे श्रीप्रद पुसा विपरीते तु मृत्युद ॥ ७८० ॥

व्यास —

अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या द्वादशे वृषली स्मृता ॥ ७८१ ॥

अस्य फलमाह वत्स —

गौरी ददद् ब्रह्मलोक सावित्र रोहिणीं ददत् ।
कन्या ददत् स्वर्गलोकमत परमसद्गति ॥ ७८२ ॥

प्राप्नोतीति शेष —

गौरी विवाहिता सौख्यसम्पन्ना स्यात्पतिव्रता ।
रोहिणी धनधान्यादिपुत्राढ्या सुभगा भवेत् ।
कन्या विवाहिता सम्यक् समृद्धा स्वामिपूजिता ॥ ७८३ ॥

नारद —

युग्मेऽब्दे सम्पद सौख्य विद्याधर्मायुष सदा ।
भर्तुर्दुष्टाभवत्योजे निषेकान्मात्र सशय ॥ ७८४ ॥

राजमार्तण्डे—

अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ।
तस्माद् गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ ७८५ ॥

श्रीपतिनिबन्धे—

मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेपि मासत्रयमेव यावत् ।
विवाहशुद्धि प्रवदन्ति सन्तो च सादयो गर्गवराहमुख्या ॥ ७८६ ॥

विवाहयोग्यायोग्यत्वमुक्तमनङ्गरङ्गे—

विद्याशौर्यविवेकधैर्यसहिते शुद्धे सुधर्मस्थिते
विख्यात धनधान्यवैभवयुते त्याज्या समाने कुल ।
कन्यादार्पवविवर्जिता गुणवती सुभ्रातृका सुन्दरी
सद्य शास्त्रविधानत स्मरकलायोग्या विवाह्या सदा ॥ ७८७ ॥

कन्यालक्षणमत्रैव—

नीलाम्भोरुहपत्रकान्तिरथवा स्वर्णप्रभा भास्वरा
भृङ्गीनीलसरोरुहा शशिमुखी सारंगशावेक्षणा।
सा यस्याः तिलजप्रसूनसदृशी नासा सुदन्तावली
सुश्रोत्रा पिकभाषिणी च जलजग्रीवाथ बिम्बाधरा ॥ ७८८ ॥
वज्राद्यङ्किनशोणपादचरणा क्षामोदरी स्वल्पभुक्
रम्भास्तम्भमनोरमोरुयुगला श्रोण्या वृहत्यान्विता।
नाभ्या चातिगभीरया गजगतिः शान्त्यल्पनिद्रालसा
शिल्पाढ्या सुकुमारिका नरवरैः कन्या विवाह्या शुभा ॥ ७८९ ॥

कन्यादूषणानि तत्रैव—

क्रूरा पिङ्गलकेशलोचनवती खर्वातिदीर्घा कृशा
लम्बौष्ठी पृथुकन्धरगतिबहुभुक् श्यामाधरा दन्तुरा।
वाचाला विषमस्तनी द्रुतगतिः सूर्यश्रवा कोपिनी
रूक्षा दारुणजिह्वकातिकठिना सश्मश्रुका लोमशा ॥ ७९० ॥
निद्राशोकवती सदाथ चलने यस्याः प्रकम्पेद्धरा
हास्ये चातिनरङ्गिती प्रभवती गल्लौ भृशाक्षस्खला।
अङ्गुष्ठादधिका भवेत्तदुपगा पादे तथानामिका
शान्त्या नो धरणीं स्पृशेदथ भवेन्मध्या तु हीनाग्रका ॥७९१॥
अज्ञाता गिरिपक्षभूरुहनदी नक्षत्रसज्ञा च या
प्रौढा रोमसमाकुला च शबला भूवल्लरी निस्त्रपा। .
गण्डौ कूपयुगान्वितौ विदधती हीनाधिकाङ्गी तथा
दुःशीला च विवाहकर्मणि सदा त्याज्याऽबला पण्डितैः ॥७९२॥

अथ वरसुलक्षणानि—

विद्याशौर्यधनाश्रयो गुणनिधिः ख्यातो युवा सुन्दरः
साचारः सुकुलोद्भवो मधुरवाग् दान्तो दयासागरः।
भोगी भूरिकुटुम्बवान्स्थिरमतिः पापाविहीनो बली
जामाता परिकीर्तितः कविवरैरेवंविधः सत्तमः ॥ ७९३ ॥

जामातृदूषणानि—

वृद्धो दुर्व्यसनो दयाविरहितो रोगी महापापवान्
षण्ढो दुष्टकुलोद्भवश्च पिशुनो द्यूतेतिबद्धस्पृहः।
निर्द्रव्यः कृपणोऽतिचंचलमतिर्नित्यं प्रवासी ऋणी
भिक्षुः स्नेहविवर्जितः सुमतिभिः कार्यो वरो नेदृशः ॥ ७९४ ॥

वशिष्ठोपि—

अत्यासन्न नातिदूरेऽप्यत्याढ्येऽत्यतिदुर्बले ।
वृत्तिहीने च मूर्खे च पटसु कन्या न दीयते ॥ ७९५ ॥
दूरस्थानामविद्याना मोक्षधर्मानुवर्तिनाम्।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः ॥ ७९६ ॥

अत्र 'हीनगुणाय कन्या न देया किन्तु गुणवते देयेत्यत्र तात्पर्यम् । न पुनरसंस्कृतायास्तस्या रजोदर्शनानन्तरमवस्थानं युक्त दोषस्मरणात् ।

यदाह यात्य —

माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरक यान्ति दृष्ट्वा कन्या रजस्वलाम् ॥ ७९७ ॥
यस्ता विवाहयेत् कन्या ब्राह्मणो मदमोहित ।
असम्भाष्यो ह्यपङ्क्तेय स भवेद्वृषलीपति ॥ ७९८ ॥

वृषली रजस्वला ।

याज्ञवल्क्य —

अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ ॥ ७९९ ॥

नारदोऽपि—

यावन्त ऋतवस्तस्या समतीता पतिं विना ।
तावन्त्यो भ्रूणहत्या स्युस्तस्य यो न ददाति ताम् ॥ ८०० ॥

अत एवाह वशिष्ठः—

रजो हि दृष्ट्वा यदि कन्यकायाः कुलद्वय दुर्गतिमेति तस्या ।
तस्मान्निरातङ्कतदुक्तकाल नोल्लङ्घ्य पाणिग्रहणं विधेयम् ॥ ८०१ ॥

मातृत पञ्चमीं त्यक्त्वा पितृत सप्तमीं त्यजेत् । इति मैथिलसम्प्रदायः। मातुसपिण्डा समानगोत्रप्रवरमातुलमानाम्नी न परिणेया सपत्नी मातृ भ्रातृ दौहित्री च न परिणेयेत्यादिक मैथिलसम्प्रदायाद्बोध्यमन्याऽस्य ।

अथ राशिकूटविचार ।

राशिकूटभेदा तद्गुणाश्च मनोहरे—

वर्णश्च वश्यश्च मिथश्च तारा योनिश्च मैत्रीगणयोर्गुणश्च ।
भमेलकौ नाडिकशुद्धिरेते यथोत्तर स्युर्बलिनो विभेदा ॥ ८०२ ॥
नाडीभेदे गुणाश्चाष्टौ सप्तसद्राशिकूटके ।
षड्गुणा गणमैत्र्याञ्च सौहार्दे पञ्च खेटयो ॥ ८०३ ॥
योनिमैत्र्याञ्च चत्वारस्त्रयस्तारावले गुणा ।
वश्यत्वे द्वौ गुणौ प्रोक्तौ वर्ण एक प्रकीर्तित ॥ ८०४ ॥

अथ वर्णकूटम् । तत्र महेश्वरः—

झपालिकर्का द्विजराशयः स्युस्तथोपरिष्टान्नृपवैश्यशूद्राः ।
क्रमेण गण्याः परतोऽखिलास्तेधिको नृवर्णः शुभकृद्विवाहे ॥ ८०५ ॥

अथ वश्यता—

दम्पत्योस्त्रिनगेन्द्रमार्गणमिता हित्वा शुभास्तारका
मर्त्यानां वशिनो विवाहमृगयं भक्ष्याश्च तोयोद्भवाः ।
त्यक्त्वैकं हि सरीसृपं मृगरिपोर्वश्यास्तथा प्राणिनो
वश्यावश्यमिहापरञ्च विविदुर्लोकप्रसिद्धं बुधाः ॥ ८०६ ॥

अथ योनिकूट नारदः—

अश्वौ शतभिषाश्विन्यौ रेवती भरणी गजौ ।
अग्निपूषावजौ प्रोक्तौ सर्प्पौ च मृगरोहिणी ॥ ८०७ ॥
आर्द्रामूले तथा श्वानौ मूषकौ भगपैतृके ।
आदित्याम्नी च मार्जारौ आपो विष्णुश्च मर्कटौ ॥ ८०८ ॥
अहिर्बुध्न्य मेगारौ मित्राज्येष्ठे मृगौ तथा ।
वसुपौष्टपदौ सिंहौ हस्तस्वाती च माहिषौ ॥ ८०९ ॥
चित्राविशाखे व्याघ्रास्येऽभिजिद्वैश्वे च बभ्रुजौ ॥ ८१० ॥

बृहस्पति —

एकयोनिषु सम्पत्त्यै दम्पत्योः सङ्गमः सदा ।
भिन्नयोनिषु मध्यः स्यादरिभावेन चैतयोः ॥ ८११ ॥
अरिभावे कृतोद्वाहः शीघ्रं मरणमादिशेत् ।

बृहस्पतिः—

दम्पत्योर्जन्मलग्नाभ्यां यौ ग्रहावधिपौ मतौ ।
तयोः परस्परं मैत्रे सर्वसम्पदुपस्थिता ।
औदासीन्ये मध्यमं स्यादरिभावे न शोभनम् ॥ ८१२ ॥

अस्यापवादः—

विवाहमाहुर्ग्रहमैत्रकूटं वियोगदं यद्यपि नैव भूयः ।
स्त्रीदीर्घनाडीसहिता गिरेजुः सराशिकश्चेत्सततं शुभादयः ॥ ८१३ ॥

रज्जुकूटं पारिजाते—

अश्विन्यादिचतुष्टयं क्रमवशात्पूर्वं कनिष्ठादिके
न्यस्येदङ्गुलिपर्व मूर्ध्नि नमसयान्यत् परं तारकम् ।

आरोहक्रमतोऽवरोहणविधिं कुर्यात्क्रमोय परः
पादोरूदरकण्ठमूर्धविषमा रज्जाविमा रज्जवः ॥ ८१४ ॥

फलम्—

पादरज्जौ प्रयाणं स्यादूरुरज्जौ धनक्षयः ।
उदरे पुत्रहानिः स्यात्कण्ठे रज्जुः पति हरेत् ॥ ८१५ ॥
दम्पत्योर्मरणायैव शिरोरज्जुरिति स्मृतम् ॥ ८१६ ॥

अथ गणकूटं, श्रीपति —

हस्तस्वातीश्रुतिमृगशिरःपुष्यमैत्राश्विनो च
पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भानि ।
पूर्वास्तिस्त्रः शिवभभरणीरोहिणोऽयुत्तराश्च
प्राहुर्मर्त्याह्वयसुरगण नूनमेते मुनीन्द्राः ॥ ८१७ ॥
चित्राश्लेषानिऋतिपितृभे वासवं वा मवर्क्षे
शक्राग्न्योर्भे वरुणदहनर्क्षे च रक्षोगणः स्यात् ।
श्रेष्ठा प्रीतिः स्वकुलगणयोर्मध्यमादित्यपुंसो
र्मर्त्यैर्दैवैरपि सह महद्रक्षसा वैरमाहुः ॥ ८१८ ॥

अथ भकूटम्

षष्ठाष्टमे मृत्युरपत्यहानिः पाणिग्रहे स्यान्नवपञ्चमे तु ।
नैस्वं घन द्वादशके परेषु प्रेमातिरेको हि वधूवरस्य ॥ ८१९ ॥

श्रीधरीये—

एकराशौ सदा प्रीतिरैश्वर्यं समसप्तके ।
द्विद्वादशेषु वैधव्य त्रिकोणेषु प्रजाक्षयः ॥ ८२० ॥
षष्ठाष्टके वियोगश्च मरण कलहात्तथा ।
त्रिभवे सौख्यसम्पत्तिश्चतुर्थे दशमे सुखम् ॥ ८२१ ॥
चतुर्थदशमे चैव त्रिभव समसप्तकम् ।
दम्पत्योः शुभकृन्नूनं यद्यपि म्हशत्रुता ॥ ८२२ ॥

अथ माह्यषट्‌कादीनि ।

महेश्वरः—

सिंहो मीनयुतस्तुलायुतवृषा धन्वी कुलीरान्वितः
कुम्भः कन्यकया युतोथ मकरो हर्यन्वितो योनिना ।
एतेष्वेव षडष्टकेष्वपि शुभ पाणिग्रहः स्यादपि
प्रागुक्तञ्च गुणत्रय वशगृहीतावानुकूल्यं भवेद् ॥ ८२३ ॥

मेषझषौ वृषमिथुनौ कर्कहरी घटमृगौ तुलाकन्ये।
हरिपद्मौ धनुमीनौ श्रेष्ठौ द्विद्वादशौ राशौ ॥ ८२४ ॥

बृहस्पति —

पञ्चमनवमे शुभदौ मेषहरी च कर्कवृश्चिकौ प्रोक्तौ।
समसप्तमे च शुभदौ घटसिंहौ पाणिपीडने कथितौ ॥ ८२५ ॥

अथ नाडीविचार

तत्र नारद —

चतुस्त्रिद्व्यङ्घ्रिभान्छाया कन्यायाः क्रमशोऽश्विभात्।
वह्निभादिन्दुभान्नाडीत्रिचतुःपञ्चऋक्षु ॥ ८२६ ॥
गणयेत्सरणया मध्यनाड्या मृत्युर्न पार्श्वयो ॥ ८२७ ॥

वसिष्ठ —

आवृत्तिमृक्षैस्त्रिभिरश्विभाद्यैः क्रमोत्क्रमाभ्यां गणयेद्बहूनि।
यद्येकपर्वण्युभयोश्च विष्णे नेष्टा नृनार्योर्भृशमेकनाडी ॥ ८२८ ॥
सौमध्यनाडी पुरुषं निहन्ति तपोदनाडी खलु कन्यकाय मृ।
अ सन्तरर्यायसमागता चेद्वर्षेण साप्यन्तरिता त्रिवर्षे ॥ ८२९ ॥

अथ कन्यावरणम्।

पश्चाद्गुद्धिदिवसे चन्द्रताराबलान्विते।
विवाहभस्योदये वा कन्यावरणमाचरेत् ॥ ८३० ॥
भूषणै फलताम्बूलै गन्धपुष्पाक्षतादिभि।
शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनै सह ॥ ८३१ ॥
गच्छेच्च कन्यकागेह वर प्रणयपूर्वकम्।
तदा कुर्यात्पिता तस्या प्रदान प्रीतिपूर्वकम् ॥ ८३२ ॥
वरस्यापि वरण चण्डेश्वरेणोक्तम्
उपवीत फल पुष्प वासासि विविधानि च।
देय वराय वरण कन्याभ्रात्रा द्विजेन वा ॥ ८३३ ॥

अथ मण्डपपरिमाणम्

वासिष्ठ —

षोडशारत्निक कुर्याच्चतुर्द्वारोपशोभितम्।
मण्डपन्तोरणैर्युक्त तत्र वेदि प्रकल्पयेत्।
अष्टहस्त तु रचयेन्मण्डप वा द्विपट्करम् ॥ ८३४ ॥

सप्तर्षिमते विवाहपटले—

मङ्गलेषु च सर्वेषु मण्डपो गृहमानत ।
कार्यं षोडशहस्तो वा द्वषूनहस्तो दशावधि ॥ ८३५ ॥
हस्तैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता ।
शोभिता चित्रितै कुराड्यैरासमन्ताच्चतुर्दिशे ॥ ८३६ ॥
द्वारादिदेहलीविद्धा कूपवृक्षव्यधास्तथा ।
न कार्या वेदिका तज्ज्ञै कार्या मङ्गलकर्मणि ॥ ८३७ ॥

विवाहवृन्दावने—

वेदिका विरचयेद्यथा तथा स्यादिय प्रविशतस्तु दक्षिणे ।
स्युर्जनाश्रययवोस्तिवर्णका पञ्चनवत्रिदिवसेषु नापत ॥ ८३८ ॥

दैवज्ञमनोहरे—

चित्राविशाखाशततारकाश्विनी ज्येष्ठाभरण्यौ शिवभाद्रद्वयम् ।
हित्वा प्रशस्त फलते न वेदिका प्रदानक कण्डनमण्डपादिकम् ॥८३९॥

शाङ्गर्धरीये—

दलन्कण्डनमण्डनवेदिका गृहसमार्जनवारकमण्डपा ।
करतले गृहमध्यगतागत तदखिल विदधीत विवाहभे ॥८४०॥

विवाहकृत्य निखिल विवाहभे विलोकयन्नात्र बल हिमद्युते ।
नवत्रिषष्ठेऽह्नि विवाहपूर्वतो न वर्णको मराडपवैलमङ्गलम् ॥८४१॥

वेदीनिर्माणमाह नारद —

हस्तोच्छ्रिता चतुर्हस्तैश्चतुरस्रा समन्तत ।
स्तम्भैश्चतुर्भि सुश्लक्ष्णा वामभागे तु सद्मनि ॥ ८४२ ॥

हस्तपरिमाणां कन्याया एव तथाहि—

कन्याहस्तै सप्तभि पञ्चभिर्वा वेदी कार्या कूर्मपृष्ठोन्नतासा ॥८४३॥

प्रागुदक्प्रवणा रम्भास्तम्भहसशुकादिभि ।
विचित्रैणाङ्किता कुम्भैर्विहितैस्तोरणाङ्कुरे ॥ ८४४ ॥
भृङ्गारपुष्पनिकरैर्वर्णकै समलङ्कृताम् ।
विप्राशीर्वचनै पुरार्यस्त्रिभिर्दीपैर्मनोहराम् ॥ ८४५ ॥
वादित्रनृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम् ।
एवंविधामारुरुक्षेन्मिथुन साग्निवेदिकाम् ॥ ८४६ ॥

विवाहपटले वराहः—

विस्तीर्णतां हस्तचतुष्टयेन हस्तोच्छ्रितां मन्दिरवामभागे।
हस्तैश्चतुर्भिः कृतनिम्नलाङ्गीं वेदिं विवाहे प्रवदन्ति तज्ज्ञाः ॥८४७॥

अथ विवाहे प्रशस्तमासादिः।

दैवज्ञवल्लमे—

फाल्गुने तपसि माधवे शुभः शुक्रनाम्नि धनपुत्रदो भवेत्।
सोऽपरैः खलु सुतार्थमानदः कार्तिके सहसि च प्रकीर्तितः ॥ ८४८ ॥

केशवः—

ध्रुवानुराधामृगमूलरेवतीकरो मघास्वातिरदूषणे गणः।
रवेरमो नामकरादिपञ्चग्रहाः करग्रहे मङ्गलकुम्भगोदशाम् ॥ ८४९ ॥

वशिष्ठः—

चूडाद्ययज्ञोपनयप्रतिष्ठा-तिथिव्रतर्क्षं च महोत्सवाद्यम्।
पर्वक्रियावास्तुगृहप्रवेशः सर्वं हि चान्द्रेण च गृह्यते तत् ॥ ८५० ॥
पौषेपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात्।
प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के ॥ ८५१ ॥

यत्र सौरचान्द्रमासाभ्यां शुद्धिरवलम्ब्यते स उत्तमो विवाहः।

दैवज्ञवल्लमे—

सौम्येऽथ वारे सुभगे च कन्या दुष्टान्वितानिष्टफला च पापे।
नन्दाजयाभद्रतिथौ च पूर्णे सौख्यञ्च रिक्तासु तथा विपत्तिः ॥८५२॥

मिहिरः—

रोहिण्युत्तररेवतीमृगशिरोमूलानुराधामघा-
हस्तस्वातिषु तौलिषष्ठमिथुनेपूद्यत्सु पाणिग्रहः।
सप्ताष्टान्त्यबहिःशुभैरुडुपतौ चैकादशद्वित्रिगे
क्रूरैस्त्र्यायषडष्टगैर्न्नतु भृगे षष्ठे कुजे चाष्टमे ॥ ८५३ ॥

व्यवहारसमुच्चये—

वेधश्च लत्ता च तथा च पातः खार्जूरवेधो दशयोगचक्रम्।
घातश्च जामित्रमुपग्रहाश्च बाणास्त्यवञ्चैर्दश चैव दोषाः ॥ ८५४ ॥

विवाहपटले—

लत्तापातस्तथा वेधो युतिर्यामित्र एव च।
खार्जूरमुपग्रहं दग्धं विवाहे चाष्ट वर्जयेत् ॥ ८५५ ॥

श्रीपति.—

ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयङ्कुर.
पष्ठयाच्चाष्टममर्कजः सुपुरतो हन्ति स्फुटं लत्तया।
पश्चात्सप्तममिन्दुज सुनवमं राहु सित पञ्चमं
द्वाविंश परिपूर्णमूर्त्तिरुडुपः सन्त्यजयेन्नेतर. ॥ ८५६ ॥

अथ पाता—

सूर्याधिष्ठितभाद् भुजङ्गपितृभत्वाष्ट्रेषु मैत्रे श्रुतौ
पौष्णे च क्रमशोऽश्विभाद्गणनया शाताशुना सयते।
धिष्ण्ये तावतिथे पतत्यवितथे चण्डो च चण्डायुध
तस्मिन्नारभतेऽसुभिर्निगदितं कार्यं न कार्यं बुधै. ॥८५७॥

अथ वेध —

पञ्चशलाकाचक्रे—

भरणी चानुराधाया कृत्तिका च विशाखयो।
रोहिण्या भिजितो वेधो मृगे चोत्तरषाढयोः ॥ ८५८ ॥
पूर्वाषाढा तथार्द्राया मूलश्चैव पुनर्वसौ।
तिष्ये ज्येष्ठा च विज्ञेय. श्लेषा चैव धनिष्ठया ॥ ८५९ ॥
मघाया श्रवणे वेधश्चाश्विन्याम्पूर्वफल्गुनी।
रेवत्युत्तरफल्गुन्या हस्ते चोत्तरभाद्रपात् ॥ ८६० ॥
पूर्वभाद्रपदे चित्रा स्वाती शतभिषा तथा ॥ ८६१ ॥

सप्त चैव विनिपात्य रेखिकास्तिर्यगूर्ध्वमथ कृत्तिकादिकम्।
लेखयेदभिजिता समन्वित चेकरेखगमनेन विध्यते ॥ ८६२ ॥

दीपिकायां—

यस्या. शशी सप्तशलाकभिन्न पापैरपापैरथवा विवाहे।
रक्ताम्बरस्त्रैव तु संवृताङ्गी श्मशानभूमिं रुदती प्रयाति ॥ ८६३ ॥

तथा च मोन —

विद्धे सप्तशालाकाख्ये विधवा रक्तवाससा।
पुनर्यान्त्यचिरान्नारी सुखानौ मुखचन्द्रिकाम् ॥ ८६४ ॥

वैधव्य नक्षत्रसख्यातुल्याब्दैर्भवति। तदुक्त वराहेण—

नक्षत्रजमुद्वाहे फलमब्दास्तारकामितैः सदसत्।

शार्ङ्गीये—

क्रूराश्रितं क्रूरविमुक्तविद्धं गन्तव्यधिष्ण्येषु कुमारिकाणाम्।
वदन्ति पाणिग्रहणे मुनीन्द्रा वैधव्यमब्दैस्त्रिभिरेवमाहुः ॥८६५॥

अस्यापवादमाह केशव —

उत्पातपापग्रहदूषितभं यदीन्दुराक्रम्य पुनर्भुनक्ति ।
तदा तदर्हं किल मङ्गलार्हं त्यजेत्समाक्रान्ततमं रवीन्द्वो. ॥ ८६६ ॥

अथ युति —

यस्मिन् भवने चन्द्रस्तस्मिन्यदि जायते ग्रहः कुत्रचित्
युतिरिति दोषः स तदाऽशुभयुक्ते नेच्छिन्ति ॥ ८६७ ॥

अथ यामित्रशुद्धि —

यामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमै ।
तस्माल्लग्नाच्च चन्द्राच्च यामित्रं परिवर्जयेत् ॥ ८६८ ॥

अथोपग्रह

विवाहवृन्दावने —

भूकम्पः सप्तमर्क्षं भवति सवितृभात्पञ्चमे विद्युदुल्का
शूलश्चैवाष्टसङ्ख्येऽशनिरिति दशमे केतुरष्टादशे च ।
दण्डस्त्रि पञ्चसंख्ये सनवदशमिते नूनमुल्का प्रदिष्टा
धिष्ण्ये द्वि सप्तसख्ये मुनिभिरभिहितश्चात्र निर्घातपातः ॥ ८६९ ॥

भादेकविंशतिमिताःकथितास्तु मार्ह
निर्घातकम्परकुलिशा परिवेषयुक्ता ।
पञ्चिन्दुगेषु न शुभं खलु कर्म कार्यं
सिद्धिं प्रयान्ति दहनास्त्रिपादिसाध्यम् ॥ ८७० ॥

खार्जूरचक्रम् श्रीपति —

व्याघातशूलपरिघव्यतिपातपूर्वं
गण्डातिगण्डकुलिशेषु सवैधृतेषु ।
आदित्यचान्द्रपितृसार्पभदस्रमूल
मैत्राख्य सुरवार्द्धकिभानि मूर्ध्नि ॥ ८७१ ॥

एका मूर्ध्नि गता त्रयोदश तथा तिर्यग्गता स्थापयेद्
रेखाचक्रमिदं बुधैर्निगदितं खार्जूरिकन्तत्र तु ।
व्याघातादिषु भस्य मूर्ध्नि कथितं तन्नैकरेखास्थयोः
सूर्याचन्द्रमसोर्मिथो निगदितो दृक्पात एकार्गलः ॥ ८७२ ॥

अत्र देशविशेषेण व्यवस्था विवाहपटले उक्ता ।

लत्ता मालवके देशे पात कौशलके तथा ।
एकार्गलञ्च काश्मीरे वेध सर्वत्र वर्जयेत् ॥ ८७३ ॥

वराह —

युतेर्दोषो भवेद् गौडे यामित्रस्य च यामुने ।
वेधदोषस्तु विन्ध्याख्ये देशे नान्यत्र कश्चन ॥ ८७४ ॥

दशयोगचक्रं व्यवहारसमुच्चये

शून्यैकवेदऋतुवेदसरुद्रशका
पञ्चैकनागशशिराश्वनवैकसाश्विः।
साध्यर्क्षमिन्दुयुतभानुसमन्वितञ्च
भागञ्च देवमुरुभिद्दशयोगचक्रम्॥ ८७५॥

स्पष्टा—

मरुन्मेघाग्निभूपालमृत्युश्चौरो रुजोऽशनि।
फलिहानिर्दशोद्वाहे सन्त्याज्यास्ते सदा बुधैः॥ ८७६॥

अथ पञ्चकं

रुद्रयामले—

गततिथियुतलग्नं पञ्चधा स्थ वित स्यात्
तिथिरविदशनागैर्वेदयुक्तं क्रमेण।
नवकृतशरशेषे यत्र सत्पञ्चकं स्या
द्गगननृपचौरं मृत्युदं वर्जनीयम्॥ ८७७॥

अथ लग्नादिभावफलम्।

तत्र वराहः —

मूर्त्तौ करोति विधवा दिनकृत्कुजश्च
राहुर्विपन्नतनया रविजो दरिद्राम्।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी
मायुःक्षयञ्च कुरुतेऽथ विभावरीशः॥ ८७८॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये।
वित्तेश्वरोमविधवा गुरुशुक्रसौम्या
नारी प्रभूततनया कुरुते शशाङ्कः॥ ८७९॥
सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुता धनभागिनीञ्च
व्यक्तं दिवाकरसुतः सुभगां करोति
मृत्युं ददाति नियतं खलु सैंहिकेयः॥ ८८०॥
स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्ता
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम्॥ ८८१॥

नष्टात्मजा रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुता गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगान्
कन्याविनाशमचिरात्कुरुते शशाङ्कः ॥ ८८२ ॥
षष्ठाश्रिता शनिदिवाकरराहुजीवा
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रां
मत्वा शशाङ्कतनयः कलहप्रियाञ्च ॥ ८८३ ॥
सौर्यारजीवबुधराहुरवीन्दुशुक्राः
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनकुलक्षयवित्तनाश
व्याधिप्रवासमरणानि यथाक्रमेण ॥ ८८४ ॥
स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी गुरुसुतश्च तथैव राहुः ।
सूर्यः करोति विधवां सरुजं महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥ ८८५ ॥
धर्मे स्थिता भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजः सरोगाम् ।
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसूतिजठरां कुरुते शशाङ्कः ॥ ८८६ ॥
राहुर्नभस्थलगतो विधवां करोति
पापे रतिं दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटाञ्च चन्द्रः
शेषग्रहा धनवतीं सुभगाश्च कुर्युः ॥ ८८७ ॥
आये रविर्बहुसुतां सधनाश्च चन्द्रः
पुत्रान्वितां क्षितिसुतो रविजो धनाढ्याम् ।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोति विधवां भृगुरर्थयुक्ताम् ॥ ८८८ ॥
अन्ते गुरुर्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनक्षयकरीं कुलटाञ्च राहुः ।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रां
पानप्रसक्तहृदयां रविजः कुजश्च ॥ ८८९ ॥

अथ गोधूलिः—

गोपैर्यष्ट्याहतानां खुरपुटदलिता या च भूमिर्दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनसुतारोग्यसौभाग्यकर्त्री।
तस्मिन्काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातं पुंसां सुखार्थं शमयति दुरितान्युत्थितं गोरजस्तु ॥८९०॥

नारद —

गोधूलिं त्रिविधं वदन्ति मुनयो नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे।
ग्रीष्मेऽर्धास्तमिते वसन्तसमये भानौ गते दृश्यतां
सूर्ये चास्तमुपागते भगवति प्रावृट्शरत्कालयोः ॥ ८९१ ॥

दैवज्ञमनोहरे—

कुलिकं क्रान्तिसाम्यञ्च मूर्तौ षष्ठेऽष्टमे शशी।
पञ्च गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः ॥ ८९२ ॥

संहितासारे—

षष्ठेऽष्टमे मूर्त्तिगते शशाङ्के गोधूलिके मृत्युमुपैति कन्या।
कुजेऽष्टमे मूर्तिगतेऽथवास्ते वरस्य नाशं प्रवदन्ति गर्गाः ॥ ८९३ ॥

केशवार्कः—

गोधूलिकेऽपि विधुमष्टमषष्ठमूर्त्ती-
र्येमो चयन्ति तदयं सुरुचिप्रपञ्चः।
पश्चाद्विशुद्धिरियमेव विवाहधिष्ण्यै-
र्यस्मादिदं सततसप्तमगे पतगे ॥ ८९४ ॥
नाशो न लग्नमिह दृष्ट्युत स्वभर्त्रा
नार्कारसौरितमसामपि सङ्गभङ्गः।
किं चन्द्रवारभयशोकमिहास्तु किञ्चि-
न्नात्र प्रमाणवचनं किमपि श्रुतं नः।
सार्के शनावपि विचित्रशिखण्डिसूनौ
तत्केवलं कुलिकयामदनोपलम्भात् ॥ ८९५ ॥

संहितासारे—

यत्रैवादेशगश्चन्द्रो द्वितीये वा तृतीयगः।
गोधूलिकः स विज्ञेयः शेषा धूलिरिति स्मृता ॥ ८९६ ॥
यावत्कुङ्कुमरेणुचन्दननिभोऽप्यस्तं न यातो रवि-
र्यावच्चोडुगणो नभस्थलगतो नो दृश्यते रश्मिभिः ॥ ८९७ ॥

गोभिश्चाखुरपि प्रभानिगदितैर्व्योम्न नभः पांशुभिः ।
सा वेला धनधान्यवृद्धिजननी गोधूलिका शस्यते ॥ ८९८ ॥

श्रीपतिः—

प्रायेण गोपाः सहहीनवर्णा प्राच्याश्च सन्ध्यासमये विवाहे ।
शंसन्ति यावत्समुपैति शान्तिं न गोखुरोत्खातरजोनिनाम्बरम् ॥८९९॥
अशुभं शुभतां याति राशेर्दोषश्च नश्यति ।
विवाहलग्नवच्छ्रेष्ठा गोधूलिः प्राह भागुरिः ॥ ९०० ॥

लल्लः —

लग्नं यदा नास्ति विशुद्धमन्यद् गोधूलिकं साधु तदा वदन्ति ।
लग्ने विशुद्धे सति वीर्ययुक्ते गोधूलिकं नैव फल विधत्ते ॥ ९०१ ॥

नारदः—

प्राच्यानाञ्च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम् ।
गान्धर्वादिविवाहेषु वैश्योद्वाहेषु योजयेत् ॥ ९०२ ॥
चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमे ।
गोधूलिकं भवेतत्र सम्पत्पुत्रादिसौख्यदम् ॥ ९०३ ॥

देवशर्मनोहरे—

घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम् ।
शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन ॥ ९०४ ॥
लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी ।
तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम् ॥ ९०५ ॥

भूपालवल्लभे—

विप्रेषु घटिकालाभे दानव्यं गोरजो बुधैः ।
सङ्कीर्णगोरजः शस्तं परेषु द्वितयं शुभम् ॥ ९०६ ॥

तत्र गोधूलसूक्ष्मकालस्तु केशवार्केणोक्तम्—

अर्धोमयन्तु घटिकादलमिष्टमाहुर्गोधूलिकं तदम्बरमणेरपि चार्धबिम्बात् ।

केचित्तु—

यावद्दिनान्ते रविरश्मिमाया पश्येत्तृतीयं रविबिम्बभागम् ।
तस्मात्परं नाडिकयुग्ममेके गोधूलिकालं मुनयो वदन्ति ॥ ९०७ ॥

एतयोः पक्षयोर्यथादेशाचारं व्यवस्थानुसन्धेया

वशिष्ठः—

शास्त्रोक्तमार्गेण सुलग्नकालं स्फुटं समानीय जलादियन्त्रैः ।
संलभ्यते मङ्गलसूक्ष्मकालः सवीक्ष्यते तत्र मिथोऽर्धदृष्ट्या ॥९०८॥

कश्यप:—

एवंगुणगणान्वीक्ष्य लग्नं निश्चित्य यत्नतः ।
सिद्धान्तोक्तेन मार्गेण लग्नकालं प्रसाधयेत् ॥ ९०९ ॥
जलयन्त्रेण तल्लग्नं दद्यात्तेनार्चितो द्विजः ।
मुखे वृत्तं द्वादशभिरङ्गुलैश्च षडुन्नतम् ॥ ९१० ॥
घटार्धवत्ताम्रपात्रं कुर्यात्तद्दशभिः पलैः ।
षष्टिमज्जदहोरात्रे घटिकापात्रमुत्तमम् ॥ ९११ ॥
माषत्रयं त्र्यशयुतस्वर्णवृत्तशलाकया ।
चतुर्भिरङ्गुलैर्वाथ पात्राविद्धं स्फुटं न्यसेत् ॥ ९१२ ॥
रवेरर्घोदयं दृष्ट्वा षष्ट्यर्द्धास्तमयं तथा ।
पूर्वोक्तलक्षणं यन्त्रं मन्त्रेणानेन निःक्षिपेत् ॥ ९१३ ॥

नारदः—

ताम्रपात्रे जलैः पूर्णे गन्धपुष्पैरलंकृते ।
तण्डुलस्थे रत्नयुते शुचिभूमावहर्पतेः ॥ ९१४ ॥
मराद्दलार्घोदयं वीक्ष्य पूर्णपात्रं विनिक्षिपेत् ।

मन्त्रमप्याह स एव—

यन्त्राणां मुख्ययन्त्रस्त्वमिति धात्रा पुरा कृतः ॥ ९१५ ॥
दम्पत्योरायुरारोग्य सुपुत्रधनहेतवे ।
जलयन्त्रकमेतस्मादिष्टसिद्धिप्रदो भवेत् ॥ ९१६ ॥

घटीयन्त्रभ्रमणफलम्—

यद्रूपं प्रथमं करोति घटिका पूर्वादिदिक्षु क्रमात्
सौभाग्यं निधनं यशो विरहितं युक्तञ्च रोगैः क्रमात् ।
कन्यावल्लभतामुपैति नियतं या निश्चला सर्वदा
स्यात्साध्वी सुतवित्तबन्धुसहिता नन्दत्यलं भूतले ॥ ९१७ ॥

घटिकाद्यभावे द्वादशाङ्गुलशङ्कुना साध्यः कालः ।
तदुक्तं कश्यपेनैव—

अथवा साधयेत्कालं द्वादशाङ्गुलशङ्कुना ॥ ९१८ ॥

शङ्कुलक्षणमाह नारद —

न्यग्रोधखदिराश्वत्थैः रक्तचन्दनवृक्षजम् ।
श्रीखंडागरुदण्डोत्थमृजुशंकुमकल्मषम् ॥ ९१९ ॥

द्वादशाङ्गुलमुत्सेधं  परिणाहं  षडंगुलम् ।
एवंलक्षणसंयुक्तं  कल्पयेत्  कालसाधने ॥ ९२० ॥

शङ्कुना षटीज्ञानन्तु कर्णकुतूहले भास्करेणाभिहितम्—

चरपलयुतहीना  नाडिकाः  पञ्चचन्द्रा-
दलमथ च निशार्द्धे याम्यगोले विलोमम् ।
यदलयुतघटीनामन्तरं  तन्नतं  स्या-
न्नतरहितदिनार्धं चोन्नतं जायते च ॥ ९२१ ॥

दिनदलं विवरं खहरो भवेन्नतक्षतिः पृथगग्रशराहताः ।
खखनवाप्त्यपृथक्स्थितयाहताः खहरतः पतिताभिमतो हरः ॥९२२॥

अभिमतं यदि पञ्चदशाधिके दिनदलात्पतितं खहरस्तदा ।
प्रथमखण्डहृतं तलितं चरं स्वगुणितं स्वपदंशविवर्जितम् ॥९२३॥

दशयुतं  पलकर्णहृतं  हृतिहॄर्युता  श्रवणोङ्गुलपूर्वकः ।
रवियुतोनितकर्णहृतेः पदं द्युतिनिजद्युति वर्गयुते श्रुतिः ॥ ९२४ ॥

श्रुतिविभक्तहृतिस्तुहरो भवेत्स पतितः स्वहरादवशेषकम् ।
पृथगिदं  रसबनन्दहृत  हरेत् स्वविपर्ययैरवशेषविवर्जितैः ॥
फलपदं हि नतं यदि शेषकं दिगधिकं हरयेच्च तदुन्नतम् ॥ ९२५ ॥

मुहूर्तचितामणौ—

पञ्चाद्रयाजौ गोमृगौ तौलिकुम्भौ
कन्यामीनौ कर्कनोचापयुग्मे ।
तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं
क्रान्तेः साम्यं नो शुभं मङ्गले तत् ॥ ९२६ ॥

इत्यादिदोषरहिते काले विवाहं कुर्यादिति ।

इति गर्भाधानादिविवाहान्तं संस्कारप्रकरणम् ।

---

# अथ वधूप्रवेश-द्विरागमनप्रकरणम्

ज्योतिस्तत्त्वे विवाहपटले—

मार्गशीर्षे तथा माघे माधवे ज्येष्ठसञ्ज्ञके।
सुप्रशस्ता भवेद्वेश्मप्रवेशो नवयोषिताम्॥ १॥

सप्तर्षिविवाहपटले—

प्रपूजयेद्दैवविदं स्वशक्त्या गन्धादिपुष्पाम्बरदक्षिणाभिः।
सम्पूजिते दैवविदि प्रतुष्टे तुष्यन्ति सर्वग्रहदेवताश्च॥ २॥

व्यवहारतत्त्वे—

पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु।
पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजेषु शस्तः॥ ३॥

नारदः—

आरभ्योद्वाहदिवसात्षष्ठे चाप्यष्टमे दिने।
वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने॥ ४॥

अयञ्च युग्मदिनविहितवधूप्रवेशः षोडशदिनादर्वाग्द्रष्टव्यः। षोडशवासरान्ता-दिवक्ष्यमाणत्वात् तदूर्द्ध्वं विषमे मासि संवत्सरे वा कार्यः, समे दोषस्मरणात्।

तथा चोक्तं नारदेन—

समे वर्षे समे मासे यदि नारी गृहं व्रजेत्।
आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत्॥ ५॥

अयं युग्मवर्षनिषेधः पञ्चमवर्षादर्वाग् द्रष्टव्यः तदूर्द्ध्वं नियमो नास्ति।

तथा चोक्तं संग्रहे—

विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात्।
ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्तादतः परस्तान्नियमो न चास्ति॥६॥

स्मृत्यर्थतत्त्वे—

राजप्रवेशो न निशि प्रशस्तो वधूप्रवेशो न दिवाप्रशस्तः।
दिवा च रात्रौ च गृहप्रवेशः सुकीर्तितं स्यात्त्रिविधं प्रवेशः॥ ७॥

मुहूर्त्तचिन्तामणौ—

समाद्रिपञ्चाङ्कदिने विवाहाद् वधूप्रवेशोऽष्टदिनान्तराले।
शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम्॥ ८॥

ध्रवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ।
वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ ९ ॥
ज्येष्ठे पतिज्येष्ठमथाधिके पतिं हन्त्यादिमे भर्तृगृहे वधूः शुचौ ।
श्वश्रूं सहस्ये श्वशुरं क्षये तनुं तातं मधौ तातगृहे विवाहतः ॥ १० ॥

निबन्धे—

विवाहप्रथमे पौषे आषाढे वाधिमासके ।
न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥ ११ ॥

## अथ द्विरागमनम्

नारायणपद्धतौ—

वृत्ते पाणिग्रहे गेहात्पितुः पतिगृहं प्रति ।
पुनरागमनं वध्वास्तद् द्विरागमनं विदुः ॥ १२ ॥

ज्योतिःसारसंग्रहे—

विवाहमासि प्रथमं वध्वा नागमनं यदि ।
तदा सर्वमिदं चिन्त्यं युग्माद्यब्दं विचक्षणैः ॥ १३ ॥
पुष्यादित्यसमीरणादितिवसुत्रीण्युत्तरारेवती-
तारानायकरोहिणीषु शुभदो मेषालिसिंहे रवौ ।
वारेष्विज्यसितेन्दुविश्वशुभदे तारेऽपि शस्ते तिथौ
कन्यामन्मथमीनतौलिमृगभे स्यादङ्गनाद्व्यागमः ॥ १४ ॥

मुहूर्तचिन्तामणौ—

चरेदथौजहायने घटालिमेषगे रवौ
रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे ।
नृयुग्ममीनकन्यकातुलावृषे विलग्नके
द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि ॥ १५ ॥

शिशुबोधिन्याम्—

स्वातीमूलपुनर्वसूत्तरकरा चित्रानुराधाश्विनी-
रोहिण्या श्रवणा द्विरागमविधौ पुष्यो धनिष्ठा तथा ।
भर्तुर्गोचरशोभने दिनपतौ काले पुनः शोभने
कुम्भाजालिरवौ शुभं शुभतिथौ वर्षे च युग्मेतरे ॥ १६ ॥

बादरायण —

नीहारांशुघनोत्तरादितिगुरुब्रह्मानुराधाश्विनी
शक्रो भास्करवायुविष्णुवरुणत्वाष्ट्रेषु शस्ते ऽतथौ

कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
जीवज्ञास्फुजितां दिने नववधूवेश्मप्रवेशः शुभः ॥१७॥

राजमार्तण्डे—

भर्तुः शोभनगोचरे हिमकरे नास्तं गते भार्गवे
सूर्ये कीटघटाजगे शुभदिने पक्षेपि कृष्णेतरे।
हित्वा दिक्प्रतिलोमगौ बुधसितौ लालाटिक दिक्पतिं
यानोता गुणशालिनीनववधूर्नित्योत्सवैर्मन्दिरम् ॥ १८ ॥
गुरुभार्गवसौम्ये तु वारे दिनपतेस्तथा।
द्विरागमनमिच्छन्ति पतिशुद्धौ तु नान्यथा ॥ १९ ॥

रत्नावल्याम्—

वैशाखे फाल्गुने चैव माघे वा मार्गशीर्षके।
पतिप्रियाथ पुत्राढ्या गता नववधूर्भवेत् ॥ २० ॥
पूर्वे चाभ्युदिते शुक्रे प्रयायाद्दक्षिणे परे।
पश्चादभ्युदिते शुक्रे यायात्पूर्वोत्तरे दिशि ॥ २१ ॥

नारदः—

मीनकन्यातुलालग्ने मकरे मन्मथे तथा।
तथा पक्षे शुभे शुक्ले नैव वारे बुधे पुनः ॥ २२ ॥
दक्षिणे सम्मुखश्चैव पुरः शुक्रो विधीयते।
पतिनाशफलं तत्र द्विरागमनमेव हि ॥ २३ ॥

शौनकसंहितायाम्—

अस्तङ्गते भृगोः पुत्रे तथा सम्मुखमागते।
नष्टे चन्द्रे निरंशे च नैव सञ्चालयेद्वधूम् ॥ २४ ॥

वशिष्ठ —

अस्ते प्राप्ते किल सुरगुरौ भार्गवेवाग्निणे वा
मासे पौषे च चैत्रे तदनु भृगुसुते दक्षिणे सम्मुखे वा।
सिंहस्थे वा सुरपतिगुरौ निद्रगा युक्तविष्णौ
गच्छेत्कन्यास्वपतिसदनं वर्षमेकं हि यावत् ॥ २५ ॥

रत्नावल्याम्—

पित्रागारे कुचकुसुमयोः सम्भवो जातुचित्स्यात्
पत्युः शुद्धिर्न भवति रवेः सम्मुखो वापि शुक्रः।
शस्ते लग्ने गुणवति तिथौ चन्द्रतारे विशुद्धे
स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिवेश्म ॥ २६ ॥

एकग्रामे चतुःशाले दुर्भिक्षे राजसंप्लवे
पतिना नीयमानाया पुरः शुक्रो न दुष्यति ॥ २७ ॥
व्याधिते चैव यात्राया विवादे राष्ट्रसंप्लवे ।
दुर्भिक्षे तीर्थयात्राया पुरः शुक्रो न दुष्यति ॥ २८ ॥

चण्डेश्वरः—

कुचकुसुमसमुद्गमो यदि स्यात्
प्रभवति नैव तदात्र कोपि दोषः ।
यदशुभमुत याति तच्च शुद्ध
भवति च नैव समागमादिदोषः ॥ २९ ॥
स्वभवनपुरप्रवेशे देशाना विप्लवे तथोद्वाहे ।
दम्पत्योरपि गमने प्रतिशुक्रे विचारणा नास्ति ॥ ३० ॥

मासफलमाह वशिष्ठः—

वैशाखे सुभगा नारी ज्यैष्ठे च पतिघातिनी ।
आषाढे मुखरा वन्ध्या गर्भस्रावस्तु श्रावणे ॥ ३१ ॥
मृत्युर्भाद्रपदे प्रोक्तः पुत्रहानिस्तथाश्विने ।
कार्तिके डाकिनी वन्ध्या मार्गे पुत्रवती सदा ॥ ३२ ॥
पौषे श्वश्रूक्षया प्रोक्ता माघे याति विरोधिताम् ।
फाल्गुने सुभगा साध्वी चैत्रे याति यमालयम् ॥ ३३ ॥

समवर्षफलं रत्नावल्याम्—

द्वितीये म्रियते कन्या चतुर्थे परगामिनी ।
षष्ठे संवत्सरे नारी पतिघ्नी धनवर्जिता ॥
अष्टमे विधवा नारी द्वादशे कुलटा भवेत् ॥ ३४ ॥
रेवत्यादिमृगान्तञ्च यावत्तिष्ठति चन्द्रमाः ।
तावच्छुक्रो भवेदन्धः सम्मुखे दक्षिणे शुभः ॥ ३५ ॥

शौनकसंहितायाम्—

दैत्यमंत्री दिवार्दशः उशना भार्गवः कविः ।
श्वेतोऽथ मण्डली काव्यो वीथीमार्गगतिस्तथा ॥ ३६ ॥
एतानि शुक्रनामानि यः कीर्तयति नित्यशः ।
प्रतिशुक्रं तस्यास्ति लक्ष्मीमायुश्च विन्दति ॥ ३७ ॥

मार्गात्त्रिभिः क्रमेणैव राहुः पूर्वं च दक्षिणे।
पश्चिमे चोत्तरे चैव सम्मुखे दक्षिणे त्यजेत् ॥ ३८ ॥

स्त्रीणां वामस्यैवाङ्गस्य दक्षत्वं वामाङ्गीत्वात्। तथा च—

द्विरागमगता कन्या आगता पितृवेश्मनि।
पदमेकत्र गच्छेत्तु राहौ सम्मुखवामगे ॥ ३९ ॥

इति वधूप्रवेश द्विरागमनप्रकरणम्



# अथ अग्न्याधान-वास्तुप्रकरणम्

अग्न्याधानं दारकाले विधेयं
कैश्चित्प्रोक्तं तच्च दायाद्यकाले।
शस्ताग्न्याधाने शक्रभे कृत्तिकायां
ब्राह्मे सौम्ये पुष्यपौष्णोत्तरासु॥ १॥

मासं शुक्रबुधादित्याश्चन्द्रः पाददिनद्वयम्।
भौमस्त्रिपक्षं जीवोऽब्दं साधवर्षद्वयं शनिः॥
राहुः केतुः सदा भुङ्क्ते सार्धमेकन्तु वत्सरम्॥ २॥

सूर्यर्क्षाद्‌गृहपृष्ठमुख्यमुदितं शिरो मृत्युदं
बाह्ये नागसुसौख्यभोगमतुलं गर्भं शनैर्नाशयेत्।
द्वौ द्वौ शुक्तिकरौ कलत्रमरणं मान्त्रद्वयं च क्रमा-
दित्थं चक्रविचारणं सुधवणैः प्रोक्तं हि गर्गादिभिः॥ ३॥

दैवज्ञमनोहरे—

मीनादिर्नवकोष्ठकादि विलिखेद् द्व्यष्टात्मके चक्रके
यस्त्वर्क्षं च नवेन्दुगेषु शुभदं रुद्रस्त्रिसप्ते समम्।
दिग्नेत्रर्त्तुषु धान्यरोगभयदं शेषेषु मृत्युप्रदं
ज्ञात्वा भूमिफलं मुनीन्द्रकथितं पश्चाद् गृहं प्रारभेत्॥ ४॥

## अथ वास्तुविचारः

भुवनभीमः—

दक्षिणे पश्चिमे चैव नैर्ऋत्ये वायवे तथा।
एभिरुच्चा भवेद् भूमी गजपृष्ठोऽभिधीयते॥ ५॥
गजपृष्ठे भवेद्वासो लक्ष्मीवान् धनवान्भवेत्।
आयुर्वृद्धिकरो नित्यं जायते नात्र संशयः॥ ६॥
मध्योच्चा च भवेदत्र नीचं चापि चतुर्दिशम्।
कूर्म्मपृष्ठा भवेद् भूमी तत्र वासो विधीयते॥ ७॥
कूर्म्मपृष्ठे भवेद्वासो नित्योत्साहो सुखप्रदः।
धनधान्यम्भवेत्तत्र निश्चितं विपुलं धनम्॥ ८॥
मध्योच्चं वर्ज्जयेद्वासं पीडा च बधबन्धनम्।
पूर्वोत्तरे भवेल्लक्ष्मीरीशाने च शुभप्रदः॥ ९॥

मुरजे म्रियते भार्या पणवे लोचनक्षतिः ।
बृहन्मुखे बन्धुनाश. फल ज्ञेयं विचक्षणै. ॥ २५ ॥

वास्तुमृत्तिका चिह्न फलञ्च वास्तुपटले—

श्वेता ब्राह्मणभूमिका च घृतवद्गन्धा शुभ स्वादिनी
रक्ताशीतिकगन्धिनोनृपतिमू स्वादे कषायो च सा ।
स्वादेऽम्ला तिलतैलगन्धसुहिता पीता च वैश्या मही
कृष्णा मत्स्यसुगन्धिनी च कटुका शूद्रेति मृल्लक्षणम् ॥ २६ ॥

स्वादे भवेद्या मधुरासिताभा
चतुर्षु वर्गेषु मही प्रशस्ता ।
स्नेहान्विता वक्त्रभुजङ्गयोर्या
सौहार्दवत्यासु विडालयोर्या ॥ २७ ॥

श्वेता च ब्राह्मणे भूमि क्षत्रिये कपिला मता ।
वैश्ये पीततरा ख्याता कृष्णा शूद्रे प्रशस्यते ॥ २८ ॥

वर्जयेन्निष्ठुरा भूमिं छिद्राश्चैवोषरा तथा ।
निष्ठुरा हरते लक्ष्मीमायुष्यं छिद्रकोषरा ॥ २९ ॥
कर्करे धनसौम्यञ्च पाषाणे च हिरण्मयम् ।
पाषकोच्छिष्टहानि स्याल्लाहे च मरण ध्रुवम् ॥ ३० ॥
यदि काचे धनं सौख्यं कलह कष्टशल्यकम् ।
भस्मना च भवेद्रोगो काष्ठेन मध्यभोजनम् ॥ ३१ ॥
गोमये धनसौख्यञ्च अस्थ्ना मृत्युर्न संशय ॥ ३२ ॥

वराह —

कण्डूयते यदङ्गं गृहभर्तुर्यत्र चामराङ्गत्वम् ।
अशुभ भवेन्निमित्तं विकृतिर्वाग्ने सशल्य तत् ॥ ३३ ॥

धनहानिर्दारुमये पशुपीडारुमयानि चास्थिकृते ।
लौहमये शस्त्रमयं कपालकेशेषु मृत्युरादेश्यम् ॥ ३४ ॥
अङ्गारतुषैर्व्याधिर्भस्मनि निर्दिशेत्तयाग्निमयम् ।
सर्वञ्च चर्मसस्थ स्ववणरजताहते न शुभम् ॥ ३५ ॥

सूत्रच्छेदे मृत्यु कोठे चावाङ्मुखे महान्रोगः ।
गृहनायस्य पत्नीना स्मृतिलोपे मृत्युरादेश्य ॥ ३६ ॥
स्कन्धच्युते शिरोरुक् कुलोपसर्गोपवर्जिते कूपे ।
भग्नेपि च कर्मिवधश्च्युते कण्ठूगृहपतेर्मृत्युः ॥ ३७ ॥

दक्षिणपूर्वे कोणे कृत्वा पूजा शिला न्यसेत्प्रथमाम् ।
शेषा प्रदक्षिणेन सुम्भाश्चैव समुत्थाप्य ॥ ३८ ॥
इच्छेदाद गृहवृद्धि तत समन्ताद् ।वृद्धय तुल्यम् ।
एकोद्देश दोष प्रागथवाप्युत्तरे कुर्यात् ॥ ३९ ॥
प्राग भवात मित्रवैर मृत्युभय यदि दक्षिणेन वृद्धि ।
अर्थविनाश पश्चादुदागवृद्धेर्मनस्ताप ॥ ४० ॥
इति प्रथमकुद्दालकपातनाघदा याति तस्य फल ज्ञेयमिति ।
आयते सिद्धय सर्वाश्चतुरस्रे धनागम ।
वृत्ते पुष्टि समाख्याता वजयेदितर सदा ॥ ४१ ॥
स्यादुन्नति पूर्वनते नराणा वास्तौ धन दक्षिणभागतुङ्गे ।
क्षयो धनाना विनते प्रतोच्यामुच्चैर्विनाशो ध्रुवमुत्तरेण ॥ ४२ ॥
पूर्वप्लवो वृद्धिकरा धनदश्चोत्तरप्लव ।
दक्षिणे मृत्युदश्चैव धनहा पश्चिमप्लव ॥ ४३ ॥
श्रिय दाह तथा मृत्यु धनहानि सुतक्षयम् ।
प्रवास धनलाभश्च विद्या पूर्वादिदिक्प्लव ॥ ४४ ॥
खात भूमिपरीक्षणे करमित तत्पूरयेत्तन्मृदा
हाने हीनफल समे समफल लाभा रजाद्धने ।
तत्कृत्वा जलपूरित शतपद गत्वा परीक्ष्य पुन
पादानघविहीनकेथ निभृते मध्याधमेण्म्बुनि ॥ ४५ ॥
भूमे प्रत्ययनश्च शकरकृप सौम्याश्रित सौख्यद
वह्नौ वह्निभय यम च मरण चौराद्भय रक्षसि ।
वाय०येवधन च धान्यहरण स्याच्छोवद वारुणे
विप्रादेरनुवर्णतश्च सुखद मृष्टिकमात्सौम्यत ॥ ४६ ॥

शिवाशकुनविचार—

पशुरूपा समायाति परिवारगणै सह ।
भुक्त्वा रौति यदेशान्यां मुखमुत्थाय सुस्वरम् ॥ ४७ ॥
शक्रे चौरादिशङ्काहुतभुजि विदिशि क्लेशभीतिश्च याम्ये
सौख्य कल्याणवित्त दितितनयदिशामल्पकालस्थितिश्च ।
वारुण्या वित्तलाभोऽनलदिशि सुहृदामुत्तरस्या स्थिरत्व
वामे स्यान्मानवैरव शिवदिशि निधन वास्तु वरुमप्रवेशे ॥४८॥

*मार्तनिर्णयो दैवज्ञवल्लभे—*

शोको धान्य पशुता नि पशुत्व स्वातिर्निस्व सकर भृत्यनाशम् ।
स्वस्यावाप्ति वह्निभातिश्च लक्ष्मी कुर्युश्चैत्राद्या गृहारम्भकाले ॥४९॥

बृहद्वास्तुके—

कार्यं श्रावणमार्गशीर्षसहिते वैशाखमास्यालय
पौषे फाल्गुनसयुते वर्नविधावप्रस्थिते पूष्णे।
याम्योदङ्मुखमाघवृश्चिककुलागोस्थे रवौ स्याद् गृहं
प्रत्यक् प्राङ्मुखज गृह घटहरी कोटञ्च नक्रङ्गते ॥ ५० ॥

वास्तुरत्नावल्या—

धनिष्ठा पचके नैव आहतव्य तृणादिकम्।
आपाढे न च कर्तव्य बुधैर्गृहनिवेशनम ॥ ५१ ॥
चैत्रे व्याधिमवाप्नोति यो गृह कारयेन्नर।
वैशाखे बहुरत्नानि ज्येष्ठे मृत्युन्तथैव च ॥ ५२ ॥
आषाढे वन्धुवस्त्राणि श्रावणे बहुपुत्रवान्।
हानिम्भाद्रपदे मासि इति ज्योतिर्विदा विदुः ॥ ५३ ॥
पत्नीनाशमिषे मासि कार्त्तिके बहुसम्पदः।
मार्गशीर्षे शुभं ज्ञेयं पौषे तस्करता भयम् ॥ ५४ ॥
माघे चाग्निभय विद्यात्फाल्गुने धनधान्यकम्।
धनिष्ठापञ्चके नैव आहतव्य तृणादिकम्।
आषाढे न च कर्तव्य बुधैः पशुगृहम्पुनः ॥ ५५ ॥

वैशाखश्रावणकार्तिकमार्गफाल्गुनेषु गृह शुभमन्येषु निषिद्धम्। तत्र गृहभूमौ सर्पाकार वास्तु परिकल्प्य तस्य क्रोडे नाभौ वास्तुखात खनेत्।

प्रद्योतनात्पञ्चनगाङ्कसूर्यनवेन्दुषड्विंशमितानि भानि।
शेते मही नैव गृह विधेयं तडागवापीखननं न शस्तम् ॥ ५६ ॥
भाद्रादित्रिषु मासेषु प्राग याम्यपश्चिमोत्तरे।
त्रिषु त्रिषु क्रमेणैव शेते वै वास्तुपन्नगः ॥ ५७ ॥
वामपार्श्वे यदाशायां भवेच्च वास्तुपन्नग.।
कुर्याद् गृहपतेर्मृत्यु शिरसि सपीडितोरगः ॥ ५८ ॥
चरणे धननाशञ्च पृष्ठो रिपुभय तथा।
उदरे सर्वार्थसिद्धिं पन्नगः कुरुते चिरम् ॥ ५९ ॥
पूर्वभागद्वय त्यक्त्वा अधोभागद्वय त्यजेत्।
मध्ये नाभिं विजानीयादित्याह च बृहस्पतिः ॥ ६० ॥

शिल्पशास्त्रे—

वेधं वृषाद् गृहे सिंहाद त्रिकं मीनात्सुरालये।
ईशानतो व्यस्तगत्या पृष्ठतस्य शुभावहः ॥ ६१ ॥

कन्यासिंहे तुलायां भुजगपतिमुखं शम्भुकोणेऽग्निखातं
वायव्ये स्यात्तदास्यं तुलिघनुमकरे ईशखातं वदन्ति ।
कुम्भे मीने च मेषे निर्ऋतिदिशि मुखं खातवायव्यकोणे
चाग्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे रक्षखातम् ॥ ६२ ॥
भाद्रत्रये शिरः प्राच्यां याम्ये मार्गशिरस्त्रये ।
फाल्गुने त्रितये पश्चाद्वास्तोर्ज्येष्ठत्रये उदक् ॥ ६३ ॥
अन्यत्रापि—
त्रिमले च तथारामे प्रासादे वापि कूपयोः ।
द्रव्याणां स्थापने चैव सिंहादौ गणयेद् बुधः ॥ ६४ ॥
नारदः—
यद्दिङ्मुखो वास्तुपुरुष कुर्यात्तद्दिङ्मुखं गृहम् ।
वास्त्वायामदलं नाभिस्तस्मादर्धाङ्गुलित्रयम् ॥ ६५ ॥
कुक्षिस्तस्मिन् न्यसेत् कुम्भं पुत्रपौत्रविवर्धनम् ॥ ६६ ॥
शब्दमार्तण्डे—
ऊर्ध्वभागत्रयं त्यक्त्वा ह्यधोभागद्वयं तथा ।
मध्ये नाभिं विजानीयादिति प्राह पराशरः ॥ ६७ ॥
सप्तशलाकालक्षणं वास्तुपटले—
शनौ स्वाती हरिर्लग्ने शुक्लपक्षे च सप्तमी ।
शुभयोगे च श्रवणे सप्तसकारः कीर्तितः ॥ ६८ ॥
सप्तयोगे भवेद्वास्तु सत्पुत्रो धनिको भवेत् ।
गजाश्वधनसम्पत्तिं परितः स तु सर्वदा ॥ ६९ ॥
वैशाखे श्रावणे चैव मार्गकार्त्तिकफाल्गुने ।
मासाः प्रशस्ता वास्तुकार्ये पत्नीपुत्रसमृद्धिदाः ॥ ७० ॥
शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करपीडनम् ।
तस्माद्विचार्य कर्त्तव्यं यदीच्छेच्छ्रियमात्मनः ॥ ७१ ॥
रिक्तामावास्या षष्ठी च वर्ज्जयेत्तिथिपञ्चकम् ।
कुजे रवौ तथा चन्द्रे वर्ज्जयेद्वास्तुपूजनम् ॥ ७२ ॥
द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
दशम्येकादशी चैव वास्तुपूजनकर्मसु ॥ ७३ ॥
नाशं दिशन्ति मकरालिकुलीरलग्ने
मेषे घटे धनुषि कर्मसु दीर्घसूत्रम् ।
कन्याझषे मिथुनके भुवमर्थलाभं
ज्योतिर्विदः कलशसिंहवृषे च सिद्धिम् ॥ ७४ ॥

वास्तुपूजा शनौ श्रेष्ठा गुरौ चैव तथा पुनः ।
मध्यमा बुधशुक्रे च शेषा वाराश्च वर्जिताः ॥ ७५ ॥

श्रीपति —

शुद्धकेन्द्रनिधनस्थिरोदये सौम्यवर्गमनुजोद्गमेपि च ।
सन्निवेश उदितो हि वास्तुनः सूरिभिर्न्न च चरोदये क्वचित् ॥७६॥

चित्रा शतभिषा स्वाती हस्तः पुष्यः पुनर्वसुः ।
रेवती रोहिणी मूलश्रवणोत्तरफल्गुनी ॥ ७७ ॥
धनिष्ठा चोत्तराषाढाभाद्रोत्तरपदायुता ।
अश्विनी मृगशीर्षा च अनुराधा तथैव च ॥ ७८ ॥
वास्तुपूजनमतेषु नक्षत्रेषु करोति यः ।
सम्प्राप्नोति नरो लक्ष्मीमिति प्राह पराशरः ॥ ७९ ॥
छेदनं समहं चैव काष्ठादीनान्न कारयेत् ।
श्रवणादौ बुधः षट्के याम्यदिग्गमनं त्यजेत् ॥ ८० ॥

ग्रामवास्तुचक्र शीघ्रबोधे —

ग्रामस्य यद्भवेदृक्ष तदाद्याः सप्त मस्तके ।
पृष्ठे सप्त हृदि सप्त पादयोः सप्त तारकाः ॥ ८१ ॥
मस्तके च धनी मान्यः पृष्ठे हानिश्च निर्धनः ।
हृदये सुखसम्पत्तिः पादे पर्यटनं फलम् ॥ ८२ ॥

चन्द्रवास्तुचक्रम् —

जन्मत्रिपञ्चशीर्षे च नवषष्ठौ च पृष्ठके ।
दशैकादशहृदये हस्तयोर्द्वयसप्तमौ ॥ ८३ ॥
तुर्याष्टद्वादशा पादौ चन्द्रराशिगतेः फलम् ।
शीर्षे सर्वसमृद्धिः स्यात् हृदये सर्वसिद्धिदम् ।
पादे पृष्ठे गते दुःखं हस्ते च शुभदायकम् ॥ ८४ ॥

अथ वृषभचक्रम् —

वास्तुचक्रं प्रवक्ष्यामि स्थापितो वृषभस्तथा ।
यस्मिन्नृक्षे भवेद् भानुस्तदाद्यत्रीणि मस्तके ॥ ८५ ॥
चत्वारश्चाग्रपादे च चत्वारः पश्चिमे पदे ।
पृष्ठे च त्रीणि ऋक्षाणि चत्वारः कोपदक्षिणे ॥ ८६ ॥
मुखे च त्रीणि ऋक्षाणि चत्वारः कोपवामके ।
पुच्छे च त्रीणि ऋक्षाणि चक्रस्येति विनिर्णयः ॥ ८७ ॥

अस्य फलम्—

मस्तके वज्रपातः स्यादुत्पातश्चाप्रपादयो ।
स्थिरत्व पश्चिमे पार्श्वे पृष्ठे चैव धनागमः ॥ ८८ ॥
दक्षिणे कापलाभ स्यात् तथा पाद्वा निरन्तरम् ।
दारिद्र्य जामवापि स्यात्पुच्छे स्वामिविनाशनम् ॥ ८९ ॥
सूर्याक्रान्त त्यजेत्सप्त ततश्चैकादश शुभ ।
ततोपि दशऋक्षाणि वास्तुकर्मणि वर्जयेत् ॥ ९० ॥

चण्डेश्वरः—

शुक्लपक्षे भवेत्सौख्य कृष्णे तस्करतो भयम् ।
तस्माद्विचार्य कर्तव्यं यदिन्छेन्द्रियमात्मनः ॥ ९१ ॥
पूर्णिमातोऽष्टमीं यावत्पूर्वास्य वर्जयेद् गृहम् ।
उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥ ९२ ॥
अमावस्याष्टमीं यावत्पश्चिमास्य विवर्जयेत् ।
नवम्यादौ तथा याम्यं यावच्छुक्लचतुर्दशी ॥ ९३ ॥
ध्रुव कृष्णाथवा स्मृत्वा कर्तव्य वास्तु चार्पणम् ।
सायाह्ने तु कृत वास्तु कर्त्तृवित्तविनाशनम् ॥ ९४ ॥
महानिशास्वपि तथा साध्ययोनी च कारयेत् ।
सायाह्नवर्ज्ज दिवसे रात्रौ महानिशा विना ॥ ९५ ॥
वास्तुकर्म्म प्रकर्तव्य लग्ने शुभनिरीक्षिते ॥ ९६ ॥

एव विहितकाले पूर्वनिरीक्षितभूमौ वास्तुपूजा कृत्वा तत्र स्तम्भनिखातन कर्तव्यम् ।

अथ वास्तुपूजा—

हस्तमात्र खनेत् खात जलेनैव प्रपूरयेत् ।
तन्मध्ये पूजयेद् देव नैवेद्यैर्धूपदीपकैः ॥ ९७ ॥

गर्ग —

पूर्णकुम्भ समारोप्य सयुत पल्लवादिकैः ।
गन्धपुष्पादिभिर्लक्ष्मीं श्रीसूक्तेन प्रपूजयेत् ॥ ९८ ॥
इन्द्रादिलोकपालांश्च स्वस्वदिक्षु घटे यजेत् ।
अष्टौ वसूश्च सपूज्य चतुर्दश च मातरः ॥ ९९ ॥
अनन्तं वास्तुपुरुष कूर्मं पृथ्वीं नवग्रहान् ।
पूजयेद् गन्धमाल्याद्यैर्नागानष्टौ प्रयत्नतः ॥ १०० ॥

तत्राचारः—

सुस्नात स्वकृत पूर्वाभिमुख शुद्धासनोपविश्य ॐ गणानान्त्वादि पठित्वा सङ्कल्प कुर्यात्। ॐ इत्यादि निर्विघ्नपूर्वकपुत्रपौत्राद्यभिवृद्धिजनवनवाहनैश्वर्य-परिपूर्णचिरकालवाससिद्धिकामो गृहवास्तुकर्मणि सपरिवारवास्तुदेवतापूजनमद्य करिष्ये। इति सङ्कल्प्य—

ॐ यथा वै खनते ब्रह्मा विष्णू रुद्रस्तथैव च।
तथाहं खनयिष्यामि आब्रह्मार्के स्थिरो भव ॥ १०१ ॥

इति मन्त्रेण हस्तमात्रं खात खनित्वाऽऽम्रपल्लव कलशोपरि दत्वा।
ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवान।
यत्त्वेमहे प्रतितन्नो जुषस्व द्विपदे शं चतुष्पदे स्वाहा ॥१०२॥

अनेन मन्त्रेण घटानीतजलेन खात प्रपूरयेत्।

तत्र खातमध्ये ओम् सूर्य इहागच्छ इह तिष्ठ पद्योर्घं ओम् सूर्याय नमः इति चन्दनादिना पूजयेत्। ॐ गणपते इहागच्छ इहातिष्ठेत्यावाह्य ततोऽर्घादिभिः पूजयेत्।

खाततटे कलश संस्थाप्य—

ॐ गंगाद्याः सरितः सर्वा समुद्राश्च सरांसि च।
सर्वे समुद्राः सरितः सरांसि जलदा नदाः ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ १०३ ॥

इति तीर्थानावाह्य दध्यक्षतवस्त्रमाल्यादिभिः कलश पूजयेत्। कलशोपरि ओं वरुण इहागच्छ इह तिष्ठ इत्यावाह्य पूजयेत्। पुष्पमन्त्रस्तु—

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।
इष्णन्निषाण मुम्म इषाण
सर्वलोकम्म इषाण ॥ १०४ ॥

इति नैवेद्यान्तम्पूजयेत्। तत स्थापितकलशपूर्वदले—

ओं इन्द्र इहागच्छ इह तिष्ठ पद्योर्घं ओं इन्द्राय नम। आग्नेयदले—ओं अग्ने इहागच्छ इह तिष्ठ पद्योर्घं ओम् अग्नये नम। एव दक्षिणादिषु यम नैर्ऋत वरुणवायुकुबेरेशानान्तान्पूजयेत्। नैर्ऋतवरुणयोर्मध्ये अनन्त पूजयेत्। इन्द्रेशानयोर्मध्ये ब्रह्माणं पूजयेत्। खातमध्ये ओम् गौर्यादिषोडशमातर इहागच्छत इह तिष्ठत पद्योर्घं ओम् गौर्यादिषोडशमातृभ्यो नमः। ओम् अनन्ताद्यष्टनागा इहागच्छत इह तिष्ठत पद्योर्घं ओं अनन्ताद्यष्टनागेभ्यो नम।

ॐ हिमकुन्दप्रतीकाशनागान्तक महाफण ।
स्थान देहि गृहार्थम्मे गृहाणार्घं नमो नमः ॥ १०५ ॥

इति मन्त्रेणार्घंदत्वा—

ॐ सर्वलक्षणसम्पन्न सर्वेश कमठाधिप ।
स्थान देहि गृहार्थम्मे विष्णुरूपिन् नमो नमः ॥ १०६ ॥

इति मन्त्रेण प्रणमेत् ।

ओम् वाचस्पते इहागच्छ इह तिष्ठ । ओम् विष्णो इहागच्छ इह तिष्ठ । ओम् मर्त्य इहागच्छेत्यादि, ओम् वास्तुपुरुष इहागच्छ इह तिष्ठ एषोऽर्घः ओम् वास्तुपुरुषाय नमः । चन्दनाक्षतपुष्पगन्धादिनैवेद्यान्तवासांसि ओम् विष्णुरूपाय वास्तुपुरुषाय नमः । ओम् कूर्मं इहागच्छ इह तिष्ठ एषोऽर्घं ओम् कूर्माय नमः । ओम् शङ्खो इहागच्छ इह विष्ठेत्यादि । ओम् अनन्त इहागच्छेत्यादि । अनन्त इहागच्छ इह तिष्ठेत्यादि । ओम् शङ्खपद्म इहागच्छतेत्यादि । ओम् धरित्रि इहागच्छ इह तिष्ठ ।

आ हिरण्यगर्भे वसुधे शेषस्योपरिशायिनी ।
वसाम्यहं तव पृष्ठे गृहाणार्घं धरित्रि मे ॥ १०७ ॥

एषोऽर्घं ओम् धरित्र्यै नमः । चन्दनाक्षतपुष्पैरित्र सम्पूज्यैत्तद्यथा—

ओं यथाचला गिरिर्मेरुरावासमचलं कुरु ।
आरोपितं गृहस्तम्भं तथा त्वमचलं कुरु ॥ १०८ ॥

इदमनुलेपनं धरित्र्यै नमः ।

ओं शुभे च शुभदे देवि चतुरस्रे महोयसि ।
शुभगे शुभजे देवि गृहे कल्याणि वस्यताम् ॥ १०९ ॥

एतानि पुष्पाणि ओम् धरित्र्यै नमः । एतानि गन्धपुष्पधूपदीपताम्बूलदध्य-क्षतसहितवस्त्रद्वयनैवेद्यानि ओं धरित्र्यै नमः ।

ओं अव्यङ्गे चाक्षते पूर्णे मूले चाङ्गिरस सुते ।
तुभ्यं मया कृता पूजा समृद्धिं गृहिणं कुरु ॥ ११० ॥

इति प्रणमेत् । ततः ओं वास्तोष्पते इहागच्छ इह तिष्ठ इत्यावाह्य—

ॐ वास्तोष्पतेप्रतरणो नरधिगयस्फानो सोभिरश्वेभिविन्दे ।
अजवा समस्ते सख्ये स्यामपि तेव
पुत्रान् प्रतिनो जुषस्व स्वाहा ॥ १११ ॥

इद पुष्पासनम् ओम् वास्तोष्पतये नमः—

ओं वास्तोष्पते सम्मया ससदा
ते सक्षीमहि वरावयागान्तु मत्या ।

पाहि क्षेम उत योगे वरन्नो यूयंस्त्रते
स्वस्तिभिः सदा नः स्वाहा ॥ ११२ ॥

इति प्रणाममन्त्राः ॥ ओं साधिदैवत-सप्र यधिदैवत-विनायकादिरुचक-सहित-रव्यादिनवग्रहा इहागच्छत इह तिष्ठत, एषोऽर्घः आदित्यादिनवग्रहेभ्यो नमः । चन्दनाक्षतादिकन्दत्वा क्षमस्वेति विसर्जनं सर्वत्र । ओमद्य कृतैतत् वास्तुकर्मप्रतिष्ठार्थं गामेकां रुद्रदैवतां यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । ततो दध्यक्षतमाम्रपल्लव बहुवारपल्लव किञ्चिद्द्रव्यं च गर्ते निक्षिप्य प्रसिद्धं स्तम्भ निखनेस्थापयेत् । ब्राह्मणांश्च भोजये । अथ इन्द्रादिदशदिक्पालेभ्यो माषसहितभक्तबलिन्दद्यात् । तत्र पूर्वस्यां दिशि ( ओम् अश्ववाहनाय शक्तिसहिताय सूर्यमूर्तये तेजोऽधिपतये बलिं गृह गृह स्वाहा ॥ ) ओम् गजवाहनाय शक्तिसहिताय इन्द्रमूर्तये देवाधिपतये बलिं गृह २ स्वाहा । आग्नेय्याम्—ओं छागवाहनाय शक्तिसहिताय वैश्वानरमूर्तये तेजोधिपतये बलिं गृह्ण २ स्वाहा । दक्षिणस्याम्—ओं महिषवाहनाय दण्डहस्ताय शक्तिसहिताय यममूर्तये तेजोधिपतये बलिं गृह्ण २ स्वाहा । नैर्ऋत्ये-ओंगजवाहनाय वज्रहस्ताय शक्तिसहिताय इन्द्रमूर्तये तेजोधिपतये बलिं गृह्ण२ स्वाहा । पश्चिमे—ओं गरुडवाहनाय शङ्खचक्रगदाहस्ताय शक्तिसहिताय विष्णुमूर्तये तेजोधिपतये बलिं गृह्ण २ स्वाहा । वायव्ये--ओं क्षेत्रपालाय मृगवाहनाय शक्तिसहिताय वायुमूर्तये तेजोधिपतये बलिं गृह २ स्वाहा । उत्तरे--ओं कुबेराय सपरिवाराय गदाहस्ताय वसुमूर्तये बलिं गृह्ण२ स्वाहा । ईशाने—ओं वृषभवाहनाय खट्वाङ्गकपाल त्रिशूलहस्ताय शक्तिसहिताय तेजोधिपतये नमः बलिं गृह्ण२ स्वाहा । नैर्ऋत्यवरुणयोर्मध्ये—ओम् पातालक्षेत्रपालाय सहस्रफणाय द्विसहस्रलोचनाय वासुकिनागाय शक्तिसहिताय सर्वनागाधिपतये बलिं गृह्ण२ स्वाहा । इन्द्रेशानयोर्मध्ये—ओम् ब्रह्मरूपाय हंसवाहनाय शक्तिसहिताय आकाशधातुव्यकारकरूपाय तेजोधिपतये नमः बलिं गृह्ण २ स्वाहा ।

ॐ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।
ते गृह्णन्तु बलिं सर्वे वास्तु गृह्णाम्यहं पुनः ॥ ११३ ॥

एव दिक्पालेभ्यो बलिन्दद्यात् । एवं वास्तुपूजां कृत्वा गृहं कुर्यात् ।

तत्र वराहः—

विस्तार-षोडशांशश्चतुर्हस्तो भवेद् गृहोच्छ्रायः ।
द्वादशभागे नो नो भूमौ भूमौ समस्तानाम् ॥ ११४ ॥
व्यासात्षोडशभागैः सर्वेषां सद्मनां भवेद्भित्तिः ।
पक्वेष्टकाकृतानां ·········तद्विकल्पाः ॥ ११५ ॥

गृहेशकरमानेन गुणयेद् दैर्घविस्तृतिः ।
तयोर्योगश्च चन्द्रोन वसुभिर्भागमाहरेत् ॥
शेष चेद्विषम श्रेष्ठ समश्चेदशुभ मतम् ॥ ११६ ॥

दीर्घविस्तारसयुक्त कर्णद्वयप्रमाणत ।
मुनिना गुणित पिण्ड वसुभिर्भागमाहरेत ॥ ११७ ॥
प्रथमे नोचजातीना क्षुधा शाकविनाशनम् ।
द्वितीये चर्मकारस्य शुभकर्मसु शोभनम् ॥ ११८ ॥
तृतीये विप्रविख्यातो भ्रमितो याति निश्चितम् ।
चतुर्थे शूद्रसख्यातो बहुपुत्रकुटुम्बक ॥ ११९ ॥
पञ्चमे म्लेच्छजातीना राजा वा राजवल्लभ ।
षष्ठे योगी च सम्भूतो निर्धनो व्याधिसयुत ॥ १२० ॥
सप्तमे गोपविख्यातो बहुगोभिर्धनाढ्यक ।
अष्टमे क्षत्रियश्चैव युद्ध कलहसंयुतम् ॥ १२१ ॥

वास्तुशास्त्रे—

भूदैर्घ्यं परिणाहक द्विगुणित वस्वग्निनन्दाष्टकै
र्नागाष्टाब्धिशरर्तुभिश्च गुणित भक्तावशेष क्रमात् ।
मार्तण्डाद्रि च दन्तितिथ्यचलभ ज्यातिस्तुरगैर्भवेद्
स्वर्ताद्यास्तिथिवारभानि च तथा योगाश्च कर्णाशका ॥१२२॥

रिक्ताकुहूवर्जितास्तिथयो ग्राह्या इति ग्रन्थान्तरोक्ति ।

वशिष्ठः—

सूर्य्यारवारराशयः सदा वह्निभयप्रदा ।
शेषग्रहाणा वाराश्च कर्तुरिष्टार्थसिद्धिदा ॥ १२३ ॥

वशिष्ठनारदौ—

गृहस्य तत्पतेस्त्वेक धिष्ण्यं चेत्त्रिधनप्रदम् ।
धनक्षय तृतीयर्क्षे पञ्चमर्क्षे यशःक्षय ॥
आत्मक्षय सप्तमर्क्ष करोत्येव हि कर्तृभात् ॥ १२४ ॥

गृहनक्षत्रविशेषो दीपिकायाम्—

प्रत्यक् दक्षिणगृहयोर्ऋक्ष विद्याद्विदिक्षु दहनादि ।
पूर्वोत्तरयोर्गृहयोरश्विन्यादीनि भानि स्यु ॥ १२५ ॥

रत्नकोषे—

क्षेत्रफले गजगुणिते स्वयमक्षमाभाजिते भवत्यायुः।
आयुषि पञ्चविभक्ते क्रमान्महाभूतविशेषः॥ १२६॥

व्यवहारोच्चये प्रकारान्तरेणोक्तम्—

सूर्याष्टभिर्विनिहतो भवनस्य बन्धो
नाक्षत्रमिष्टमिह युग्मशरं तु निघ्नम्।
एकीकृतं रसनिशाकरपक्षभुक्तं
शेषन्ततो भवति तस्य गृहस्य पिण्डः॥ १२७॥

गृहभूमिसमाहतपिण्डपदं वसुलोचनरन्ध्रगजैर्गुणितम्।
रविभूधरभूधरयोगहृतं द्रविणव्ययबन्धभसंकलितम्॥ १२८॥

बादरायणः—

विस्तारगुणितं दैर्घ्यं गृहक्षेत्रफलं भवेत्।
तत्पृथग्वसुभिर्भक्तं शेषमायो ध्वजादिकः॥ १२९॥
अष्टनिघ्नक्षेत्रफले भहृते शेषमत्रभम्।
भेष्टभक्ते व्ययः शेषमायादल्पो व्ययः शुभः॥ १३०॥

गर्गः—

गृहनामाक्षरं क्षेत्रफलं व्यययुतं हरेत्।
त्रिभिः शेषांशको ज्ञेयो द्वितीयोत्र मृतिप्रदः॥ १३१॥

त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यैरुच्छेपभूतास्त्रिधमातिशोकः।
शत्रोर्भयं राजभयं च मृत्युः सुखप्रवासश्च नवप्रभेदा॥ १३२॥

गृहिणां यच्च नक्षत्रं यन्नक्षत्रगृहस्य च।
उभयोरपि यत्नेन त्रिकोणं परिवर्जयेत्॥ १३३॥
निषिद्धेष्वपि कालेषु सानुकूले शुभे दिने।
तृणकाष्ठगृहारम्भे मासदोषो न विद्यते॥ १३४॥
द्वात्रिंशद्धस्तु विस्तीर्णं भवेद् ब्राह्मणमन्दिरम्।
प्रत्येकं क्षत्रियादीनां चतुर्हस्तविहीनकम्॥ १३५॥
वसुद्विशरबाणांशैश्छायतश्चोभयोरपि।
षर्धितैर्विषमैर्हस्तैरायव्ययविशुद्धये॥ १३६॥
यत्र दण्डाभिते क्षेत्रे तत्रायो हस्तसम्मितः।
क्षेत्रालाभे तु तत्रैव प्रमितः स्यादिहाङ्गुलैः॥ १३७॥
अङ्गुलैर्हस्तमिते क्षेत्रे सोङ्गुलैस्तदलाभतः।
पादैर्वाथ यवैर्वापि मायः क्षेत्रानुसारतः॥ १३८॥

गृहेषु कर्महस्तेन मानं स्वामिकरेण वा।
देवतानाञ्च धिष्ण्येषु कर्म्महस्तेन केवलम् ॥ १३९ ॥
ईशानान्ते च दिग्भागेष्वाग्न्यादि क्रमशः स्थिताः।
अन्योन्याभिमुखा ह्येते विज्ञेया वास्तुकर्मणि ॥ १४० ॥
ध्वजे चैवार्थलाभः स्याद्धूम्रे सन्तापनित्यता।
सिंहे तु विपुला भोगाः शुनि स्यात्कलहो महान् ॥ १४१ ॥
वृषभे धनधान्यञ्च खरे वै दुष्टवित्तता।
गजे भद्राणि पश्यन्ति ध्वाङ्क्षे तु मरणं भवेत् ॥ १४२ ॥

तथा च—

ऐन्द्र्यां हि ध्वजसंस्थानमाग्नेय्यां धूम्र एव च।
दक्षिणस्यां स्थितः सिंहो नैरृत्यां श्वा तथैव च ॥ १४३ ॥
वारुण्यां वृषभस्थानं वायव्यां खर उच्यते।
उत्तरेण गजस्थानमीशान्यां ध्वाङ्क्ष एव च १४६ ॥ १४४ ॥
स्वस्वस्थानच्युतानान्तु तन्निबोध यथाक्रमम्।
ध्वज स्वस्थानतः श्रेष्ठो गज सिंहस्तथैव च ॥ १४५ ॥
वृष सिंहं गजञ्चैव खेटकर्वटकादयो।
द्विपश्चैव प्रयोक्तव्यो वापी कूपतडागके ॥ १४६ ॥
आसने योजयेत् सिंहं शयने च मतङ्गजम्।
वृषभं भोजने पात्रे ध्वज छत्रेषु योजयेत् ॥ १४७ ॥
शेषांस्तु योजयेन्नित्यमशुभाः शूद्रकर्मसु।
अग्न्यागारेषु सर्वेषु ये चाप्यग्न्युपजीविनः ॥ १४८ ॥
धूम्र वै योजयेत्तेषु श्वानस्वे म्लेच्छयोनिषु।
खरो वैश्यजने योज्यो ध्वाङ्क्ष सत्यकुटुम्बिषु ॥ १४९ ॥
वृष सिंह गजश्चैव प्रासादस्थिरमन्दिरे।
गृहस्य स्वमुखाः श्रेष्ठा मध्यमास्तु पराङ्मुखाः ॥ १५० ॥
सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि।
परस्परं मित्रयोश्च एकनाडो प्रशस्यते ॥ १५१ ॥
आयविरुद्धे भवने न सुख षट्कोष्ठके भवेन्मृत्युः।
निधनं द्विद्वादशगे त्रिकोणगेऽपत्यहानिः स्यात् ॥ १५२ ॥
निधनं सप्तमतारे पञ्चमतारे यशोहानिः।
विपदस्तृतीयतारे ( यमांशके गृहपतेर्मृत्युः ॥ १५३ ॥

चण्डेश्वरः—

व्यासेन गुणितं दैर्घ्यमष्टभिश्च विभाजितम् ।
यच्छेषं स भवेदाय प्रोक्तो नामभिरष्टभिः ॥ १५४ ॥
एको ध्वजो द्वयं धूम्रस्त्रिक सिंहः प्रकीर्तितः ।
चतुष्क सारमेयस्तु पञ्चको वृष उच्यते ॥ १५५ ॥
षट्: खरो विनिर्दिष्ट सप्तमश्च गजो भवेत् ।
अष्टको वायस प्रोक्तो ह्यायनामविनिर्णयः ॥ १५६ ॥
ऐन्द्रीदिशा समारभ्य प्रदक्षिणविधानतः ।
अष्टासु दिक्षु वाच्यव्या क्रमेणायध्वजादिजाः ॥ १५७ ॥

विश्वकर्मणि—

ध्वजे प्रतीचीमुखमग्रजानामुदङ्मुखं भूमिभृतान्तु सिंहे ।
वृषे विशां प्राग्वदनं गजेषु शूद्रस्य याम्यायनमामनन्ति ॥ १५८ ॥
एका चेद्दक्षिणा शाला द्वे चेद्दक्षिणपश्चिमे ।
तावत्पूर्वान्न कुर्वीत यावन्नोत्तरतो भवेत् ॥ १५९ ॥
वेधत्यागाय शालानां दशहस्तमिहान्तरम् ।
आयते गुणिते दैर्घ्ये वसुभिर्भागमाहरेत् ॥
उद्धते तु सम त्याज्यं विषमे शोभनं गृहम् ॥ १६० ॥

अथ द्वाराणि—

चतुःषष्टिपदे वास्तौ शङ्करादिदिशः क्रमात्
प्रदक्षिणमिहागम्य द्वाराणां फलमुच्यते ॥ १६१ ॥
अनलभयं स्त्रीजन्म प्रभूतधनता नरेन्द्रता लभ्यम् ।
क्रोधपरताऽनृतत्वं क्रौर्यं चौर्यञ्च पूर्वेण ॥ १६२ ॥
अल्पसुतत्वं प्रेष्यं नीचत्वं भक्ष्यपानसुतवृद्धिः ।
रौद्रं सुतघ्नमधनं सुतवीर्यघ्नञ्च याम्ये स्यात् ॥ १६३ ॥
सुतपीडा रिपुवृद्धिर्धनसुतलाभः सुतार्थफलसम्पत् ।
धनसम्पन्नृपनिभयं धनक्षयो रोग इत्यपरे ॥ १६४ ॥
धनपत्नी रिपुवृद्धिर्धनसुतलाभः समस्तु गुणसम्पत् ।
पुत्रधनप्राप्तिर्वैरं सुतेषु दोषाः स्त्रिया नैःस्वम् ॥ १६५ ॥
प्रागादिककुभां नाथा यथार्हस्यं प्रदक्षिणम् ।

मेषाद्या राशयो ज्ञेयास्त्रिराशिवृत्तिपरिक्रमात् ॥
वास्तुलक्षण प्रवक्ष्यामि यथा रुद्रेण भाषितम् ॥ १६६ ॥

गरुडवर्गी—पूर्वे वसति सदा लोकपूजितो भवति । आग्नेय्यां महा-
कन्दल दक्षिणे बहुलाभ । पश्चिमे मृत्युभय, वायव्ये राजपूजा । उत्तरस्यां
सामान्यम् ऐशान्यां महालाभ ।

विडालवर्गी—पूर्वे सुखसम्पद् । आग्नेय्यामश्वकरिलाभः । दक्षिणस्यां
कन्दलम् । नैर्ऋत्यां गोमहिषलाभ । पश्चिमे हि मरणम् । वायव्यां सुख-
सम्पद् । ऐशान्यां वस्त्रलाभ । उत्तरे धनलाभ ।

सिंहवर्गी—पूर्वे लाभ । आग्नेय्यां लाभ । दक्षिणे दीर्घकार्यसिद्धि ।
नैर्ऋतौ बहुसम्पत्ति । पश्चिमे अर्थक्षति । वायव्ये शुभम् । उत्तरे वस्त्र-
लाभ । ऐशान्यां राजपूजा ।

श्ववर्गी—पूर्वे मरणम् । आग्नेये अपवाद । दक्षिणे शत्रुभयम् । नैर्ऋत्ये
सुखम् । पश्चिमे अग्निभयम् । वायव्ये सबलाभ । उदीच्यां व्याधि ।
ऐशान्यां राजपूजा ।

नागवर्गी—पूर्वे मृत्यु । आग्नेय्यां शत्रुभयम् । दक्षिणे कन्दलम् ।
नैर्ऋत्ये मित्रलाभ । पश्चिमे भयम् । वायव्ये अन्नोत्पत्ति । उत्तरे
तुरगलाभ । ऐशान्यां धनलाभ ।

मूषकवर्गी—पूर्वे धनम् । आग्नेय्यां देशान्तरगमनम् । दक्षिणे शत्रु
भयम् । नैर्ऋतौ मरणम् । पश्चिमे अग्निभयम् । वायव्ये करितुरगलाभ ।
उत्तरे रोगशोकौ । ऐशान्यां मित्रलाभ ।

गजवर्गी—पूर्वे सुखम् । आग्नेये दुःखम् । दक्षिणे राजभयम् । नैर्ऋतौ
श्री सुखञ्च । पश्चिमे शत्रुभय कन्दन च । वायव्ये लाभ । उत्तरे
राजपूजा ।

अथ वर्गकथनम्

शीघ्रबोधे—

अवर्गो गरुडो ज्ञेयो बिडाल स्यात्कवर्गक ।
चवर्ग सिंहनामा स्यात् टवर्ग कुक्कुर स्मृत ॥ १६७ ॥
सर्पोऽपि स्यात्तवर्गोऽपि पवर्गो मूषको मत ।
यवर्गो गजनामा स्यात्शवर्गो मेष उच्यते ॥ १६८ ॥
स्ववर्गं द्विगुण कृत्वा परवर्गेषु सयुतम् ।
अष्टभिश्च हरेद्भागं योऽधिक स ऋणी भवेत् ॥ १६९ ॥

मुहूर्तचिन्तामणौ—

यद्भं द्व्यङ्कसुनेशदिग्विहृतमसौ ग्रामः शुभो नामभात्
स्वं वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम् ।
काकिण्यस्त्वनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थदो-
ऽथ द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः ॥ १७० ॥

गरुडोऽष्टशरो ज्ञेयो बिडालोऽक्षशरः स्मृतः ।
पटशरः केसरी प्रोक्तः शुनहा चाब्धिसम्मितः ॥ १७१ ॥
अहिः सप्तशरश्चाथ मूषको रूपसम्मितः ।
गजश्चाग्निशरश्चाथ द्विशरो मेष उच्यते ॥ १७२ ॥
ग्रामनामदिशाश्चैव शरानेकत्र योजयेत् ।
वसुभिश्च हरेद्भाग शेष ग्रहदशा भवेत् ॥ १७३ ॥

दशाफलम्—

रवेर्भयं विधोर्हर्षं कुजे उत्पात एव च ।
बुधे च बन्धुप्राप्तिः स्याद् गुरौ मासस्य वृद्धयः ॥ १७४ ॥
शुक्रे मिष्टान्नभोज्यो स्याच्छनौ कलह एव च ।
राहौ च मरणं ज्ञेयमेव ग्रहदशाफलम् ॥ १७५ ॥

वास्तुशास्त्रे—

यावद्गृहर्क्षं गणयेत्सुधिष्ण्यात्तावद्भिरर्क्षं नवभिश्च शेषाः ।
बुधैस्तृतीया सकला त्रिवर्ग्या या पञ्चमी सप्तमिका न शस्ता ॥१७६॥
धिष्ण्यानीह च सप्तमः क्रमतया वह्नेस्तु पूर्वादितः
सृष्ट्या तानि भवन्ति यत्र गृहमासत्र चन्द्रो भवेत् ।
हानिं पृष्ठगतः करोति पुरतस्त्वायुःक्षतिं चन्द्रमाः
पार्श्वे दक्षिणवामके शुभकरोऽग्रे भूप देवामयोः ॥ १७७ ॥
प्रीतिः स्यात्समसप्तमी च दशमी चैकादशी शोभना
दारिद्र्यं युगला करोति मरणं षष्ठी कलिः पञ्चमी ॥ १७८ ॥

द्वारे चाप्यन्य —

नवभागं गृहं कुर्यात् पञ्चभागं च दक्षिणे ।
त्रिभागं वामतः कृत्वा शेषद्वारं प्रकल्पयेत् ॥ १७९ ॥

दैर्घ्यं नवांशपदमत्र दैर्घ्यद्वारं शुभं स्यात्त्रिचतुर्थभागे ।
चतुर्थशेषे दिशि दक्षिणस्यां पश्चाच्चतुष्पञ्चमके तयोदक्ः ॥ १८० ॥

अथ द्वारफलम्

तत्र वराह —

मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभं द्वारम् ।
उच्छ्रायाद् द्विगुणमिता त्यक्त्वा भूमिन्न दोषाय ॥ १८१ ॥
रथ्याविद्धन्द्वारं नाशाय कुमारदोषदं तरुणा ।
कोणद्वारे शोको व्ययाम्बुनिस्रविणि प्रोक्तम् ॥ १८२ ॥
कूपेनाप स्मारो भवति नाशश्च देवताविद्धे ।
स्तम्भेन स्त्रीदोषा कुलनाशो ब्रह्मणोभिमुखे ॥ १८३ ॥
उन्माद स्वयमुद्घाटिते तथा पिहिते स्वयं कुलनाश ।
मानाधिक्ये पशुभयं दस्युभयं व्यसनदं नीचम् ॥ १८४ ॥
द्वार द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च ।
आध्यात क्षुद्भयदं कुण्ड कुलनाशनं भवति ॥ १८५ ॥
पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय ।
बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभि पीडा ॥ १८६ ॥
मूलद्वारं नान्यैर्द्वारैरभिसन्दधीत तरुण्या ।
घटं फलपत्रविचित्रियतात् ॥ १८७ ॥

मुहूर्तचिन्तामणौ—

कुम्भेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्क्यो
पौषे नक्रे च याम्योत्तरमुखसदनं गोऽजगेऽर्के च राधे ।
मार्गे जूकालिगे सद्ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यै
सूतीगेहं त्वदित्या हरिभविधिभयोस्तत्र शस्तं प्रवेश ॥१८८॥
स्नानागारपाकशयनास्त्रभुजश्च धान्य
भाण्डारदैवतगृहाणि च पूर्वत स्यु ।
तन्मध्यतस्तु मथनाज्यपुरीषविद्या
भ्यासारयरोदनरतौषधसर्वधाम ॥ १८९ ॥
तारा जीवशनिज्ञसोमभृगुणा वेदमप्रवेशे शुभा ॥ १९० ॥

स्वश्व गृहपतेर्वा म लग्न वा मराशर्वा यन्मुख गृहम्भवति तद्दिग्द्वारमेषु निषिद्धेषु प्रवेश । तथा च भामवराक्षे—

पराशर —

यद्दिङ्मुखे भवद्वेश्म तद्द्वारक्षेऽपि तन्छ्रये ।
नन्दाया दक्षिणं द्वारं भद्राया पश्चिमन्तु ।
जयायामुत्तरद्वारं पूर्णाया पूर्वतो विशेत् ॥ १९१ ॥

अथ प्रवेशलग्ने भावफलानि

श्रीपतिः—

केन्द्रत्रिकोणद्रव्यायैः शुद्धैः क्रूरैः षट्त्र्यायगैर्गुरौ ।
लग्ने भृगौ वा केन्द्रे वा स्थिरप्रामोदये विशेत् ॥ १९२ ॥

दैवज्ञमनोहरे गृहारम्भकाल एव गृहीतः ।

तदुक्तम्—

गृहारम्भोदितैर्मासैर्धिष्ण्यैर्वा रैर्विशेद् गृहम् ।
विशेत्सौम्यायने हर्म्यं तृणागारन्तु सर्वदा ॥ १९३ ॥

अथ गृहप्रवेशविधिमाह

महेश्वरः—

कृत्वादौ वास्तुपूजां जलभृतकलशं ब्राह्मणान्स्वामतोऽर्कं
वामं कृत्वाथ कार्यो नवनरभवने तोरणाढ्ये प्रवेशः ॥ १९४ ॥

वसिष्ठः—

कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं
विप्रान्पूज्यानग्रतः पूर्णकुम्भम् ।
हर्म्यं रम्यं तोरणस्रग्वितानैः
स्त्रीभिः स्राग्वी गीतवाद्यैर्विशेच्च ॥ १९५ ॥

वामरविः मुहूर्तचिन्तामणौ—

वामो रविर्मृत्युसुतार्थलाभतोऽर्के पञ्चभे प्राग्वदनादिमन्दिरे ।
पूर्णातिथौ प्राग्वदनं गृहे शुभा नन्दादिके याम्यजलोत्तराननें ॥१९६॥

विश्वकर्मा—

लग्नात्प्रागादितो दिक्षु द्वौ द्वौ राशी नियोजयेत् ।
एवमेकं न्यसेत्कोणे सूर्यं वामे विचिन्तयेत् ॥ १९७ ॥

कुम्भचक्र मुहूर्तचिन्तामणौ—

वक्त्रे भूरविभात्प्रवेशसमये कुम्भेऽग्निदाहः कृता
प्राच्यामुद्वसनं कृतायमगता लाभः कृताः पश्चिमे
श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे
रामाः स्थैर्यमतिः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ॥ १९८ ॥

विद्यामाधवे—

सूर्य्यस्थितर्क्षात्कलशाय भानामेकं मुखे दिक्षु चतुष्टयानि ।
गर्भे चतुष्कं त्रितयन्तु कण्ठे गुदे त्रिकं स्थापनचक्रमेतत् ॥ १९९ ॥

मुखे तु स्वामिनो मृत्युः पूर्वेणोद्वसनं भवेत् ।
दक्षिणे चार्थलाभाय पश्चात्सन्ततिवृद्धये ॥ २०० ॥

उत्तरे हानिरोगौ च गर्भे गर्भविनाशकृत् ।
कण्ठे श्रियमवाप्नोति गुदे धनविनाशनम् ॥
प्रवेशे नगरादीनाञ्चक्रमेतद्विलोकयेत् ॥ २०१ ॥

इति कृतितत्त्वे गृहप्रवेशप्रकरणम्

# अथ मिश्रप्रकरणम्

तत्र भूप्रवेश श्रीपतीये—

तिष्योत्तरापवनरौद्रमघानुराधा-
चित्रार्यमेषु वृषवृश्चिककर्कटेषु ।
भद्रां विहाय नवमीं कुजजीवचन्द्र-
सौम्योदयांशदिवसेषु विशेद्धरित्रीम् ॥ १ ॥

पौष्णादित्युत्तरार्कासुरगुरुविधुषु ज्ञार्कशुक्रेन्दुवारे
रिक्तां छिद्राख्यपर्वाण्युदयमपि विहस्य प्रवृद्धे शशाङ्के ।
कृष्यारम्भं विदध्याद् झषवृषमृदुककर्कटेषु प्रसन्नः
स्नात्वा सम्पूज्य धात्रीं जलकुसुमफलैर्दोहदैर्मन्त्रपूतैः ॥ २ ॥

विश्वेश्वरः

ब्राह्मोत्तरश्रवणवायुशशाङ्कपौष्ण-
मूले पुनर्वसुकरे कृषिकर्म कुर्यात् ।
वारे सिते गुरुबुधे च तिथावरिक्ते
कन्याधनुर्मिथुनवृश्चिकमीनलग्ने ॥ ३ ॥

राजमार्तण्डे—

ऋक्षेषूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनी
प्राजापत्यकरद्विदैवतगुरुप्राणेशपादेषु च ।
निर्दोषैर्वृषभैर्हलैश्च सुमनोमालाभिरभ्यर्चितै-
र्दत्त्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् ॥ ४ ॥

रत्नावल्यां—

शस्तेषु चन्द्रतारेषु शुचिः शुक्लेन वाससा ।
स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः ॥ ५ ॥
पृथ्वीं च मङ्गसयुक्तां पूजयित्वा प्रजापतिम् ।
अग्निम्प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा ॥ ६ ॥
फालानां कनकैः स्पृष्ट्वा धुरीणवृषभान्न्यसेत् ।
उत्तराभिमुखो भूत्वा क्षीरेणार्घं प्रदापयेत् ॥ ७ ॥

तत शुभकर श्रीमान् कृषिकर्म समारभेत् ।
वर्जयेद् भग्नशृंग च खुरभग च वर्जयेत् ॥ ८ ॥
विकल छिन्नलांगूल कपिल वृषभन्तथा ।
हलप्रवाहण कार्यं नोरुभिर्वृषकर्पके ॥ ९ ॥
हलादिभिर्हढै क्षेम वृद्धैर्न्न शुभ भवेत् ।
वृषभा यदि युद्ध्यन्ते तस्य विघ्नप्रदम्भवेत् ॥ १० ॥
तस्मात्सर्वप्रयत्नेन निर्विघ्न कृषि कारयेत् ।
एका जयकरी रेखा तृतीया सुखवृद्धिदा ॥ ११ ॥
पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा ।
अत ऊर्ध्वं न कर्तव्य महद्दुःख तदा भवेत् ॥ १२ ॥
सम्पूज्याग्नि द्विज देव कुर्याद्धलप्रवर्त्तनम् ।
हेमनिघृष्टफालाग्र च्छिन्नरेखन्न कारयेत् ॥ १३ ॥
स्मर्त्तव्या वसव शुक्रः पृथुराम सचन्द्रमा ।
पराशरो बलभद्रश्च सर्वविघ्नोपशान्तये ॥ १४ ॥
हले प्रवाह्यमाने च कूर्म्म उत्पद्यते यदि ।
गृहिणी म्रियते तस्य ततोग्नेश्च भयम्भवेत् ॥ १५ ॥
ईषाभङ्गे भवेत्कष्ट सशयो जीवितस्य च ।
कृषिनाशो यूपभङ्गे समीरे म्रियते सुत ॥ १६ ॥
योक्त्रभगे च सञ्जाते सस्यहानिश्च जायते ।
हले प्रवाह्यमाने तु गौरेक प्रपतेद्यदि ॥ १७ ॥
प्रपतेद्युक्तशस्त्रस्तु बन्धन सप्रयच्छति ॥
ज्वरातिसाररोगेण कृषिभग समादिशेत् ॥ १८ ॥
प्रवाहे युक्तमात्रे तु ततो गौ स्त्वनते यदि ।
रसे लीढे नदयन्ति तदा सस्यञ्चतुर्गुणम् ॥ १९ ॥

हलप्रवाहनक्षत्रमाह

नारद —

मृदुध्रुवक्षिप्रचरे विशाखापितृभेषु च ।
हलप्रवाह प्रथम विदध्यान्मूलभे वृषे ॥ २० ॥

श्रीपति —

मृदुध्रुवक्षिप्रचरेषु मूले मघाविशाखासहितेषु भेषु ।
लप्रवाह प्रथम विदध्यान्नीरोगमुख्यान्वितसौरभेयै ॥ २१ ॥

कश्यप —

गुरौ लग्नगते शुक्रे बलिन्याप्योदये विधौ ।
शस्ता कृषिक्रिया तत्र दुर्बले क्रूरखेचरे ॥ २२ ॥

ज्योति सारसागरे—

मेषलग्ने पशून् हन्ति कर्कटे जलज भयम् ।
सिंहे शस्यभय ज्ञेय तुलाया हलसक्षय ॥ २३ ॥
मकरे शस्यनाशः स्यात्कुम्भे चौरभय भवेत् ।
हन्त्यष्टमी बलीवर्दान् नवमी शस्यघातिनी ।
षष्ठी च कीटजननी पशून् हन्ति चतुर्दशी ॥ २४ ॥

चतुर्थ्यामपि इदमेव फल ध्येयम् ।

हलक्रममाह नारद —

हलादौ वृषनाशाय भत्रय सूर्यभुक्तभ तु ।
अग्रे त्रृक्षत्रय लक्ष्म्यै सौरय पार्श्वस्य पञ्चके ॥ २५ ॥
शूलत्रयेपि नवके मरणायान्यपञ्चकम् ।
श्रियै पुच्छे त्रय श्रेष्ठ स्याद्भत्रे लाङ्गले शुभ ॥ २६ ॥

वसिष्ठ —

अर्कगताद्गतसस्थ भत्रितय नेष्टमुभयतस्त्रिरष्टम् ।
षोडशधिष्ण्य नरक शिष्टमनिष्ट च लाङ्गले चक्रे ॥२७॥

कश्यप —

त्रिपद्वेपु नवर्क्षेषु सप्तस्वर्कविभक्तभात् ।
हानिर्वृद्धि कर्तृमृत्युर्लक्ष्मीप्राप्तिर्यथाक्रमात् ॥ २८ ॥

अथ बीजोप्ति, रत्नमालायाम्—

हस्तादिवपुष्योत्तररोहिणीषु      चित्रानुराधामृगरेवतीषु ॥
स्वातौ धनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफला प्रदिष्टा ॥ २९ ॥

वसिष्ठ—

धातृद्वये कोणपपैतृपुष्ये हस्तत्रये ह्युत्तरमैत्रभेषु ।
पौष्णे धनिष्ठात्रयवाश्विनीषु बीजोप्तिरुत्कृष्टफला प्रदिष्टा ॥ ३० ॥

नारदः—

मृदुध्रुवक्षिप्रभेषु      पितृवायुवसूडुषु ।
समूलभेषु      बीजोप्तिरत्युत्कृष्टफलप्रदा ॥ ३१ ॥

राजमार्तण्डे—

रवौ रौद्रायपादस्थे भूमे सजायते रज ।
तस्माद्दिनत्रय तत्र बीजवाप परित्यजेत्‌ ॥ ३२ ॥

अथ बीजोप्तिचक्रम्‌

नारदः—

भवेद्भत्रितय मूर्ध्नि धान्यनाशाय राहुभात्‌ ।
गले त्रयं कज्जलाय वृद्धौ द्वादश चोदरे ॥ ३३ ॥
निस्तुण्डरन्ध्र लांगूले भचतुष्टयमीरितम्‌ ।
नाशो बहि पञ्चके स्याद्बीजोप्ताविति चिन्तयेत्‌ ॥ ३४ ॥

हले विशेषः मत्स्यपुराणे—

हलकृष्टेऽथवा देशे सर्वबीजानि वापयेत्‌ ।
त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तानपि ॥ ३५ ॥

स्वरोदये—

लाङ्गलदण्डिकायूपयोक्त्रद्वयसमन्वितम्‌ ।
दण्डिकादि लिखेद्भानि दिनेशाक्रान्तभादिव ॥ ३६ ॥
दण्डिकाहलयूपाना द्विद्विस्थाने त्रिक त्रिकम्‌ ।
योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चाग्रके द्विकम्‌ ॥ ३७ ॥
दण्डस्थे च गवा हानिर्यूपस्थे स्वामिनो भयम्‌ ।
लक्ष्मीर्लाङ्गलयोक्त्रादौ क्षित्रारम्भदिनर्क्षके ॥ ३८ ॥
वृषाकार लिखेच्चक्र सर्वावयवसंयुतम्‌ ।
लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्वकम्‌ ॥ ३६ ॥
मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्दे द्विक द्विकम्‌ ।
त्रीणि पृष्ठे द्वय पुच्छे अष्टौ पादोदरे द्विकम्‌ ॥ ४० ॥
हलप्रवाहवद्बीजप्रारम्भादिदिनर्क्षकम्‌ ।
यदङ्गेषु स्थितो यस्माद्वक्ष्ये सर्व शुभाशुभम्‌ ॥ ४१ ॥
आस्ये हानिर्मुखे नेत्रे कर्णे भिक्षाटन तथा ।
शीर्षे धृतिस्तथा शृङ्गे सौख्य स्कन्धे च मङ्गलम्‌ ॥ ४२ ॥
पृष्ठे कष्ट शुभम्पुच्छे भ्रम पादे सुख हृदि ।
चक्रयोग दिकम्प्रोक्तं वृषचक्रफलं बुधैः ॥ ४३ ॥

चन्द्रिकायाम्—

पूर्वाग्नियाम्यफणिचित्रशिवान्यभेषु
रिक्ताष्टमीविगतचन्द्रतिथिं विहाय
द्व्यङ्गालिगोसमुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥ ४४ ॥

हलप्रवाहवद्बीजवपनविधिः—

ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालैश्च पूजयेत् ।
सालङ्कारो हलधरः स्रग्भिश्च पूजितं हलम् ॥ ४५ ॥
दध्याज्यमधुभिः श्रेष्ठ फलाम च प्रलेपितम् ।
कर्षं प्रवर्तयेत्प्राज्ञो नूतनेन हलेन च ॥ ४६ ॥
हस्ताश्विनीज्यचन्द्रेषु ब्रह्मेन्द्रविष्णुवारुणे ।
वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च ॥ ४७ ॥
वारे जीवेज्यशुक्रे च सोमे हितकरे तथा ।
युग्मस्त्रीवृषमीनेषु शस्तं स्याद्बीजवापनम् ॥ ४८ ॥

दैवज्ञ —

गुरुसोमसुर्य्यशुक्रा क्षेम्या सम्पत्करा शुभा ।
बुधार्कभूमिपुत्राश्च न भवन्ति फलप्रदा ॥ ४९ ॥
गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत् ।

बीजवपने विशेष —

हेमवारिविलिप्तस्य बीजस्योन्नयतः शुचिः ।
इन्द्रक्षिते समाधाय स्वयं बीजत्रयं वपेत् ।
प्राङ्मुख कलश गृह्य इमं मन्त्रमुदीरयेत् ॥ ५० ॥
ॐ त्वं वै वसुन्धरे सीते बहुशस्यफलप्रदे ।
नमस्ते मे शुभ नित्य कृषिं मेधां शुभं कुरु ॥ ५१ ॥

हारीत —

अष्टागवं धर्म्यहलं षड्गवं जीविताथिनः ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥ ५२ ॥
अह्नः पूर्वे द्विपामे च धुर्य्याना वहन स्मृतम् ।
त्रियामे मध्यमे भागे मागे चान्ते यथासुखम् ॥ ५३ ॥

गोभिः प्रणाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति यावदिन्द्राश्चतुर्दश ॥ ५४ ॥

अथैवमुप्तबीजोत्पन्ने चारोपणार्थं मुहूर्तमाह,

राजमार्त्तण्डे—

पूर्वभाद्रपदामूल - रोहिण्युत्तरफाल्गुनी ।
विशाखा वारुणं चैव धान्यानां रोपणं चरेत् ॥ ५५ ॥

मुहूर्तचिन्तामणौ—

द्वेशाजपादनिरृतिधातृशताख्यमर्क्षे
शस्यस्य रोपणमिहार्किकुजौ विना सन् ॥ ५६ ॥

अथ धान्यच्छेद राजमार्तण्डे—

रौद्रे विष्ण्ये तथा सौम्ये हस्ते पुष्पेऽनिले तथा ।
शस्यच्छेदं प्रशसन्ति मूलश्रवणवासवे ॥ ५७ ॥

दीपिकायान्तु—

याम्याजपादहिघनातलतोयशाकचित्रोत्तरोडुपु कुजार्कजवारवर्ज्यम् ।
शस्तेन्दुयोगकरणेषु तिथावरिक्ते धान्यच्छिदास्थिरनरस्वगृहोदयेषु ॥५८॥

व्यवहारोच्चये—

धान्याना लवन कुर्य्याद् गुरौ शुक्रे च सर्वदा ।

अथ कणमर्दन तदुक्तं

व्यवहारोच्चये—

फल्गुन्यो श्रवणा चैव मघामूला तथा मता ।
अनुराधा तथा ज्येष्ठा रेवती धान्यमर्दने ॥ ५९ ॥
केवले सिंहलग्ने वा गुरूदयेऽथवा पुन ॥ ६० ॥

राजमार्तण्डे—

हस्ते च वापयेद् बीज संग्रह वैश्वदैवते ।
रोहिण्यां मर्दन कुर्य्यादुत्तरासु प्रवेशयेत् ॥ ६१ ॥

अत्र कर्मविशेषेषु ऐकैकस्यैव नक्षत्रस्योपादानं मुख्यत्वज्ञापनार्थम् ।

अथ धान्यानयन पुष्पोत्तारणञ्च—

रोपणादिसनक्षत्रे वासरे नन्दरिक्तके ।
अन्नस्यानयन पुष्पफलाद्युत्तारणं च सत् ॥ ६२ ॥

अथ सूर्यादिक्रिया तत्रैव—

मूलचित्रानुराधान्त्ये विशाखाकृत्तिकामृगे ।
उत्तरे रोहिणीशाके सूर्पेणान्नन्तु माऽर्जयेत् ॥ ६३ ॥

अथ धान्यस्थिति ।

दीपिकायाम्—

याम्याग्निरुद्राहिविशाखपूर्वामाहेन्द्रपित्र्येतरभे शुभाहे ।
धान्यादिसंस्थापनमेषु शस्तं मृगस्थिरद्वयङ्गगृहोदयेषु ॥ ६४ ।

चण्डेश्वरः—

हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये ।
स्थिरलग्ने गुरोर्वारे बीजधान्यं भृशुक्रयोः ॥ ६५ ॥
माघे वा फाल्गुने वापि वैशाखे बीजसंग्रहः ।
शोषयेत्तापयेद्रौद्रे वालरोधे निधापयेत् ॥ ६६ ॥
याम्यादितिमघाज्येष्ठा उत्तरेषु च कारयेत् ।
मीनलग्ने शुभे ऋक्षे निधने क्रूरवर्जिते ।
क्षेत्रस्य कोष्ठके धान्यं गर्गो वदति सादरम् ॥ ६७ ॥
ओम् धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा ।
लेखयित्वा इमं मन्त्रं धान्यागारे निधापयेत् ॥
शस्यवृद्धिं परां कुर्यात्पूजिता प्रतिपूजयेत् ॥ ६८ ॥

अथ बीजबन्धनम् ।

शिशुबोधिन्याम्—

रोहिणी रेवती स्वाती मूलं हस्त पुनर्वसू ।
बीजबन्धनमेतेषु कर्तव्यं सूरिभिः सदा ॥ ६९ ॥

अथ धान्यनिष्क्रमणम् ।

चण्डेश्वरः—

त्रिपूत्तरेषु रोहिण्यां धनिष्ठावारुणेषु च ।
एतेषु दशसु ज्ञेयं धान्यनिष्क्रमणं बुधैः ॥ ७० ॥

दक्षिणदिङ्मुखगमनं गमनमभिनवासु नारीषु ।
व्ययमपि शस्यधनानां न बुधा बुधवासरे कुर्युः ॥ ७१ ॥
शनिवारेषु नो कार्यो धनधान्यव्ययो बुधैः ।
ध्रुवर्क्षेषु च नो कार्य्यमित्याह भगवान्भृगुः ॥ ७२ ॥

अथ धान्यादिविवर्धनम् ।

दीपिकायाम्—

श्रवणत्रय विशाखा ध्रुवपुष्यपुनर्वसूनि वायुश्च ।
अश्विन्यथ च ज्येष्ठा धनधान्यविवर्धने शस्ता ॥ ७३ ॥

अथ नवान्नम् ।

गणपतिः—

हस्तचित्रानुराधाया रोहिणीश्रवणद्वये ।
मृगाश्विन्युत्तरास्वर्के शुभे चापि तिथावपि ॥ ७४ ॥
नवान्नस्यापि विहित प्राशन फलमूलयो ।

भुजबलभीमे—

नवान्नभोजन नृणा मृदुक्षिप्रचरे शुभे ॥ ७५ ॥
वीक्षिते च युते लग्न विपनाशौ विवर्जयेत् ।
नवान्न न च नन्दाया मासे पौषे मघौ यथा ॥ ७६ ॥

शिशुबोधिन्याम्—

धनिष्ठा कृत्तिका पुष्य श्रवण च पुनर्वसु ।
अश्विनी रेवती चैव तथा हस्तादिपञ्चकम् ॥ ७७ ॥
रोहिणी मृगशिराश्चैव उत्तरात्रयमेव च ।
कन्याया मिथुने मीने ज्योति शास्त्रविशारदै ॥ ७८ ॥
वृश्चिके पूर्वभागेषु बुधे चैव बृहस्पतौ ।
रवौ चैव तथा शस्त नवान्नस्य च भक्षणम् ॥ ७९ ॥
नन्दात्रयोदशीरिक्तातिथय श्राद्धकर्मणि ।
वर्जनीयास्तथा शुक्र सदा च सूरिभि पुन ॥ ८० ॥

स्मृतावपि—

वृश्चिके पूर्वभागे तु नवान्न शस्यते बुधै ।
उत्तरे क्रियमाणे तु धनुष्येव कृतम्भवेत् ॥ ८१ ॥
कृत धनुषि यच्छ्राद्ध मृगनेत्रासु रात्रिषु ।
पितरस्तत्र गृह्णन्ति नवान्न मितकाङ्क्षिण ॥ ८२ ॥

नारद —

नन्दायाम्भार्गवदिने त्रयोदश्या त्रिजन्मनि ।
अत्र श्राद्ध न कुर्वीत पुत्रदारधनक्षयात् ॥ ८३ ॥

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।
सुतिथौ समुहूर्त्ते च नवान्नफलभक्षणम् ॥ ८४ ॥
सूर्ये चैव विशाखगे स्मरतिथौ तारे त्रिजन्मान्विते
नन्दामन्दमहीजकाव्यदिवसे मासेऽपि पौषेऽथवा।
पूर्वेषु त्रिषु याम्यभे मघयुते चन्द्रे तथा चाष्टमे
नो भाद्रं शुभदं नवान्नकरणे पुत्रार्थनाशप्रदम् ॥ ८५ ॥
चैत्रे पौषे कृष्णपक्षे नवान्नं भक्षयेद्यदा।
भवेज्जन्मान्तरे रोगो पितॄणां नोपतिष्ठति ॥ ८६ ॥
त्रिजन्मसु त्रयोदश्यां नन्दायां पितृभे तथा।
श्राद्धं शुक्रदिने नैव ध्रुवं सन्ततिमिच्छता ॥ ८७ ॥

सारसमुच्चये—

त्रयोदशांशपर्यन्तं वृश्चिके च यदा रवौ।
पक्षे स्वच्छेऽर्कचन्द्रे च वारे ज्ञशुक्रसंज्ञके ॥ ८८ ॥
नवान्नं तत्र कुर्वीत शुभे चन्द्रे च ऋक्षके।
भोजनञ्च सदा त्याज्यं नवान्नेषु सदा बुधैः ॥ ८९ ॥
हरियुग्मे दितियुग्मे पूषायुग्मे विरञ्चियुग्मे च।
करपञ्चकोत्तरेषु नवान्नफलभक्षणं शस्तम् ॥ ९० ॥

ब्रह्मपुराणे—

ब्रह्मा विष्णुबृहस्पती शशधरो मार्त्तण्डपौष्णादितौ
मैत्रे चित्रविशाखवायुधनभे मूलाश्विदहनौ तथा।
शाके वारुणऋक्षके शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम् ॥ ९१ ॥

अथ वस्त्रपरिधानं श्रीपतिः—

रोहिणीषु करपञ्चकेऽश्विभे ह्युत्तरासु च पुनर्वसुद्वये।
रेवतीषु वसुदैवते च भे नव्यवस्त्रपरिधानमिष्यते ॥ ९२ ॥
रोहिणीगुरुपुनर्वसूत्तरे या बिभर्त्ति नववस्त्रभूषणम्।
सा न योषिदवलम्बते पतिं स्नानमाचरति वारुणेऽपि च ॥९३॥

जीर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ
भौमे शुचे बुधदिने तु भवेद्धनाय।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥ ९४ ॥

दैवलवल्लभे—

नासत्यपौष्णवसुभि करपञ्चकेन
मार्तण्डभौमगुरुदानवमन्त्रिवारे ।
मुक्तासुवर्णमणिविद्रुमशङ्खदन्त
रक्ताम्बराणि विधृतानि भवन्ति सिद्ध्यै ॥ ९५ ॥

ज्योति सारे—

मार्त्तण्डेऽल्पधन भय शशिदिने क्लश सदा भूमिजे
वस्त्र लाभकर बुधे सुरगुरौ विद्यागम सम्पद ।
नानाभोगरतिप्रमोदवनिताशय्यादिलाभो भृगौ
दैन्य शाश्वतरोगवानपि दिने वस्त्रमहे सौरिणाम् ॥ ९६ ॥

राशौ वासोलिसिंहे अलिपु च मकरे रोगपीडादिकष्ट
शत्रोर्भीतिश्च कुम्भे धनुपि धनरति कर्कटे वह्निदाह ।
इच्छाप्राप्तिस्तुलाया सुखमिह मिथुने सर्वसम्पद्वृषे स्याद्
मीने वै बहुलाभतापि युरवौ वस्त्रस्य वै चित्रिका ॥ ९७ ॥

व्यास—

चित्राविशाखापवनानुराधावस्त्रश्विनीभास्कररेवतीपु ।
आदित्यजीवेन्दुजशुक्रवारे लग्ने स्थिरे वस्त्रपिधानशस्तम् ॥ ९८ ॥

पुनर्वसूत्तरापुष्या रोहिण्यार्द्रा तथैव च ।
पतिजीवितमिच्छन्ती न स्त्री हेमादिक वदेत् ॥ ९९ ॥

स्त्रीणाम्पुनर्विशेषो मुहूर्तगणपतौ—

अश्विन्याञ्च धनिष्ठाया रेवत्या करपञ्चके ।
सुवर्णरत्नवस्त्राणां विशेष धारण स्त्रिया ॥ १०० ॥

श्रीपतिः—

कज्जलकर्दमगोमयलिप्ते वाससि दग्धवति स्फुटिते वा ।
चिन्त्यमिद नवधाऽभिहितेस्मिन्निष्टमनिष्टफल च सुधीभि ॥ १०१ ॥
निवसन्त्यमरा हि वस्त्रकोणे मनुजा पार्श्वदशान्तमध्ययोश्च ।
अपरेऽपि च रक्षसा त्रयाशा शयने चासनपादुकासु चैवम् ॥ १०२ ॥
भोगप्राप्तिर्देवताशे नराशे पुत्राप्ति स्याद्राक्षसाशे च मृत्यु ।
प्रान्ते सर्वांशेष्वनिष्ट फल स्यात्प्लुष्टे वस्त्रे नूतने साध्वसाधु ॥१०३॥
छत्रध्वजस्वस्तिकवर्धमानश्रीवत्सकुम्भाम्बुजतोरणानाम् ।
छेदाकृतिर्नैर्ऋतभागगोपि पुसा विधत्ते न चिरेण लक्ष्मीम् ॥ १०४ ॥

कङ्कप्लवोलूककपोतकाकक्रव्यादगोमायुखरोष्ट्रसर्पाः ।
कूर्द्दयसंप्रेतसमानशस्त्रा च्छेदाकृतिर्दैवतभागगापि ॥ १०५ ॥

कश्यपः—

प्रीत्या क्ष्मापालदत्तं यद् विप्रादेशात्करग्रहे ।
निन्द्यवासरधिष्ण्येपि धारयेच्च नवाम्बरम् ॥ १०६ ॥

अथ श्वेतपीतकर्बुररक्तवस्त्रधारणम् गणपतिः—

शुक्लवस्त्रोत्कभे धार्य्यं रवौ शुक्रे गुरौ बुधे ।
विशुक्रे कर्बुरं पीतं सभौमे रक्तमम्बरम् ॥ १०७ ॥

अथ कृष्ण नील तत्रैव—

पुनर्वसुधनिष्ठास्ये चित्राहस्तचतुष्टये ।
पूर्वोत्तरे शनौ सूर्ये नीलकृष्णाम्बरं शुभम् ॥ १०८ ॥

अथ रोमजवस्त्रधारणं तत्रैव—

नीलरस्त्रोदिते धिष्ण्ये रेवतीपुष्ययोरपि ।
शुक्रे शनैश्चरार्के च धारयेद्रोमजाम्बरम् ॥ १०९ ॥

अथ सतूल कञ्चुकधारणं तत्रैव—

पुष्योत्तरानुराधासु धनिष्ठाऽश्विकरत्रये ।
रोहिण्यां गुरुशुक्रे ह्नि सतूलं कञ्चुकं धरेत् ॥ ११० ॥

अथ सुवर्णरजतमिश्रितन्तुमयवस्त्रपरिधानं तत्रैव—

सुवर्णतन्तुसमिश्रं वासो धार्यं रवौ कुजे ।
राजतं तद्विशुक्रेऽब्जे वस्त्रधारणभे शुभम् ॥ १११ ॥

अथ वस्त्रनिर्माणम्—

रोहिणीरेवतीचित्रानुराधामृगत्र्युत्तरे ।
शनिं हित्वा कुविन्दानां तन्तुभिः पटसाधनम् ॥ ११२ ॥

अथ कुसुम्मादिभिर्वस्त्ररञ्जनम्—

पुनर्वसुद्वये हस्तात्पञ्चके श्रवणत्रये ।
अश्विभेऽर्के कवीज्यारे वाससां रञ्जनं शुभम् ॥ ११३ ॥

अथ कज्जलादर्शकृत्यं तत्रैव—

चित्राचतुष्टयेऽश्विन्यां धनिष्ठारेवतीमृगे ।
चन्द्रेऽर्केऽह्नि शनौ स्त्रीणां दर्पणाञ्जनयोर्धृतिः ॥ ११४ ॥

अथ केशबन्धनं तत्र चण्डेश्वर —

प्रालेयांशुदिने दिनेऽथ सवितु सौम्यग्रहाणामपि
वारे वापि निशाकरे शुभकरे पक्षे च कृष्णेतरे ।
मूलेन्द्रश्रवणोत्तरादितिकरत्वाष्ट्रश्विपुष्येन्दुभि
स्त्रीणाङ्केशकलापबन्धनविधि सन्तानसम्पूर्तिकं ॥ ११५ ॥

अथालङ्कारधारणे बादरायणः—

हस्तानुराधविधुपुष्यधनिष्ठयुक्त
चित्रोत्तरासु च पुनर्वसुरोहिणीषु ।
लग्ने स्थिरे रविसुतेन्दुजजीववारे
हेमादिधारणविधि कथितो नराणाम् ॥ ११६ ॥

चित्राविशाखापवनानुराधावस्वश्विनीभास्कररवतीषु ।
आदित्यजीवेन्दुजशुक्रवारे लग्ने स्थिरे स्त्री कनकादि दध्यात् ॥११७॥

अथ दन्तिदन्तच्छेदः शिशुबोधिन्याम्—

*श्रवणाश्विनीपुष्यधनिष्ठापुनर्वसुहस्तचित्राप्रशस्ततिथिवारेषु ।*
*मगलशनिवारौ गुर्वादित्यहरिशयन कृष्णपक्ष निशाञ्च विहाय ॥११८॥*

अथोपानत्परिधानं चर्मकृत्यञ्च गणपतिः—

चित्रापूर्वानुराधार्द्राज्येष्ठाश्लेषामघामृगे ।
विशाखाकृत्तिकामूलरेवत्या शार्कसूर्यजे ॥ ११९ ॥
उपानत्परिधानं च चर्मकृत्य प्रशस्यते ॥ १२० ॥

*अथ शङ्खप्रवालादिधारणे श्रीपति—*

करादिपञ्चकेऽश्विभे सपौष्णवासरे स्मृता ।
धृतिश्च शङ्खकाञ्चनप्रवालरक्तवाससाम् ॥ १२१ ॥

अथ भोजनपात्रे भोजनारम्भ गणपति —

रोहिणीयुगले हस्तत्रितये रेवतीद्वये ।
श्रवणत्रितये पुष्ये पुनर्वस्वनुराधयो ॥ १२२ ॥
त्र्युत्तरे बुधशुक्रेज्यवारे चामृतयोगके ।
सुवर्णरौप्यकांस्यादिभाजने भोजनं शुभम् ॥ १२३ ॥

वशिष्ठ —

लघुमैत्रध्रुवमृदुभे सितेन्दुबुधजीववारेषु ।
हेमरजतादिभाजने भोजनमारोग्यममृतयोगेषु ॥ १२४ ॥

अथ मद्यपानारम्भ श्रीपति —

रौद्रे पित्र्ये वारुणे पौरुहूते याम्ये सार्पे नैर्ऋते चैव धिष्ण्ये ॥ १२५ ॥

अथ भूषाघट्टनम् वशिष्ठ —

क्षिप्रान्त्यचरचलऋक्षे रिक्तामावर्जितेषु दिवसेषु ।
निखिलेष्वपि वारेषु त्रिपुष्करे भूषण कार्यम् ॥ १२६ ॥
त्रिपुष्कराभिधे योगे ह्युत्तरे रेवतीद्वये ।
श्रवणज्येष्ठे मृगे पुष्ये पुनर्वस्वनुराधयो ।
हस्तत्रयेऽथ रोहिण्या भूषा कार्या शुभेऽहनि ॥ १२७ ॥

त्रिपुष्करलक्षणम् मुहूर्तचिन्तामणौ—

भद्रातिथौ रविजभूतनयार्कवारे
द्वीशायमाजठरणादितिवह्निवैश्वे ।
त्रैपुष्करो भवति मृत्युविनाशवृद्धौ
त्रैगुण्यदो द्विगुणकृद्वसुतक्षचान्द्रे ॥ १२८ ॥

अथ रत्नयुक्तभूषाघट्टन वशिष्ठ —

स्थिरसाधारणचरभे लघुमैत्रेष्वर्ककुजवारे ।
तेषामेव विलग्ने माणिक्यविभूषण कार्यम् ॥ १२९ ॥

अथ मुक्तासहितभूषाघट्टन वशिष्ठ —

क्षिप्रमृदुध्रुवचरभे शशिसितयोर्वासरेषु तल्लग्ने ।
मुक्ताफलरजतमय भूषणमखिल सवत्सक कार्यम् ॥ १३० ॥

अथ शस्त्रघट्टन ज्योति सारसागरे—

कृत्तिकासु विशाखासु भौमार्कशनिवासरे ।
वह्निना घटित शस्त्र नृपाणा जयदायकम् ॥ १३१ ॥

दीपिकायाम्—

मूलेन्दुपूर्वात्रययाम्यपित्र्यशक्राश्विसर्पानलशूलिनश्च ।
खड्गादिसाधारणकर्म कुर्यात्तिथौ विलग्ने च शुभे शुभाहे ॥ १३२ ॥

साधारणं घट्टनोल्लिखीकरणादिकम् ।

अथ मुद्रापातन सारसमुच्चये—

मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनिचन्द्रवर्ज्यम् ।
वारे तिथौ पूर्णजया च भद्रा मुद्राप्रपात शुभदो नराणाम् ॥ १३३ ॥
गुर्वस्ते न सितास्ते वा मुद्राया घट्टन क्वचित् ।
क्रूरग्रहांशगे लग्ने न कार्य भूतिमिच्छता ॥ १३४ ॥

अथ वितानतूलिकोपधानादिनिर्माणं गणपतिः —

कुर्याद्धस्त्रोदिते धिष्ण्ये तूलिकामुपधानकम् ।
वितानाद्यञ्च धन्नीयादूर्ध्वास्येऽमूर्द्धभेषु ॥ १३५ ॥

अथ वस्त्रमयगेहादिनिर्माणं तत्रैव—

श्रवणत्रयेऽश्विनीपुष्येऽनुराधारोहिणामृगे ।
हस्तत्रये पुनर्भेऽन्त्ये ऽयुत्तरे वस्त्रवेश्म सत् ॥ १३६ ॥

अथ वस्त्रक्षालनं वशिष्ठः —

पौष्णादित्यार्कपञ्चाश्विवसुषु च भवेद्वाससां क्षालनाद्य
हित्वा षष्ठीञ्च पर्वाङ्गजसुतशनिदिनं श्राद्धघस्रं शुभं स्यात् ॥ १३७ ॥

गणपतिः —

पुनर्वसुद्वयेऽश्विन्यां धनिष्ठाहस्तपञ्चके ।
हित्वार्कार्किबुधं रिक्तां षष्ठीं श्राद्धदिनं तथा ॥ १३८ ॥
पञ्चपर्वञ्च वस्त्राणि छालयेद्रजकादिना ॥ १३९ ॥

अथ सुगन्धभोगस्तत्रैव—

श्रवत्रयेऽश्विनीपुष्ये पूर्वाषाढानुराधयोः ।
हस्तत्रये पुनर्भेऽन्त्ये मृगभे वसुभेऽहनि ।
चन्दनागुरुकस्तूरीपुष्पाणां धारणं शुभम् ॥ १४० ॥

अथास्त्रधारणम् व्यवहारोच्चये—

पुष्ये चादितिचित्रपञ्चतनये शाक्रोत्तरा रेवती ।
वाजीहस्तविशाखमित्रसहिते भानौ गुरौ भार्गवे ।
कुम्भे कीटगृहे वृषे मृगपतौ चन्द्रे शुभैरीक्षिते
सन्नाहः शरखड्गकुन्तछुरिका धार्या नृपाणां हिताः ॥ १४१ ॥

अथ शय्यासनपादुकाभोगः दीपिकायाम्—

मैत्रेन्दुपुष्ययमभादितिराजिचित्रा
हस्तोत्तरात्रयहरीज्यविधातृभानि ।
एतेष्वतीव शयनासनपादुकानां
सम्भोगकार्यमुदितं मुनिभिः शुभाहे ॥ १४२ ॥

अथ सूचीकर्म चण्डेश्वरः —

वासवादितिभत्वाष्ट्रमैत्रचन्द्राश्विनीषु च ।
सूचीकर्म न तत्रापि ऋक्षैरेभिः प्रशस्यते ॥ १४३ ॥

अथ शय्यासनारम्भस्तत्रैव—

हस्तादितिमद्यगुरूत्तराणि पौष्णाश्विमूलेन्दुभचित्रभानि।
वारेषु जीवेन्दुसितेन्दुजानां शय्यासनारम्भणमादिशन्ति॥ १४४॥

अथ गजाद्यारोहणम्—

पौष्णाश्विनी च वसुभास्करवासुदेव
चित्रापुनर्वसुसमीरणवारुणेषु।
वारेषु सूर्यशशिसोमजजीवशुक्रे
ष्वारोहणं निगदितं गजवाजिनाञ्च॥ १४५॥

पौष्णप्रजेशादितिभद्वयानि हस्तादिपट्कश्रवणोत्तराणि।
दोलादिमातङ्गतुरगमाणामारोहणेऽभीष्टफलप्रदानि॥ १४६॥

व्यवहारोक्तौ—

पौष्णाश्विनीवरुणमारुतशीतरश्मि-
चित्रादितिश्रवणपाशिसुरेज्यवित्तैः।
वारेषु सूर्यशशिजीवसितेन्दुजाना-
मारोहणं गजतुरगरथेषु शस्तम्॥ १४७॥

अथ सेवाकरणम्—

रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि।
सेवेत स्वामिनं भृत्यः शुभवारे शुभे तिथौ॥ १४८॥

अथ सेव्यप्रभुलक्षणं श्रीपतिः—

स्ववर्गं द्विगुणीकृत्य परवर्गेण संयुतम्।
अष्टभिश्च हरेद्भाग योऽधिकः स ऋणी भवेत्॥ १४९॥

अथ भैषज्यभक्षणं श्रीपतिः—

पौष्णद्वये चादितिभद्वये च हस्तत्रये च श्रवणत्रये च।
मैत्रे च मूले च मृगे च शस्तं भैषज्यकर्म प्रवदन्ति सन्तः॥ १५०॥

वशिष्ठः—

हस्तत्रये पुष्यपुनर्वसौ च विष्णुत्रये चाश्विनिपौष्णभेषु।
मित्रेन्दुमूलेषु च सूर्यवारे भैषज्यमुक्तं शुभवासरेषु॥ १५१॥

दीपिकायाम्—

द्व्यङ्गोदये गुरुबुधेन्दुसितेषु तेषां
वारे रवेश्च सविधौ सुतिथौ सुयोगे॥ १५२॥

कश्यपः—

षट्सप्ताष्टानन्त्यशुद्धौ च शशिनः शुभखेचराः ।
आयुर्दायकरे योगे कर्तव्या चौषधक्रिया ॥ १५३ ॥

दीपिकायाम्—

जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ।
क्षौरभैषज्यवादाध्वकर्त्तनेषु च वर्जयेत् ॥ १५४ ॥

अथ नृत्यारम्भः ।

ज्योतिस्सारे

हस्तः पुष्यो वासवो वारुणश्च
ज्येष्ठा पौष्णं वायवश्चोत्तराश्च ।
पूर्वाचार्यैः कीर्तितं चक्रवर्त्ती
नृत्यारम्भे शोभनोऽयम्भवर्गः ॥ १५५ ॥

नृपप्रवेशावलोकने—

मूलविष्णुवसुरेवतीमघारोहिणीकरसमीरणोत्तराः ।
वारुणेषु निजभे शुभमहे शस्यते नृपपुरप्रवेशनम् ॥ १५६ ॥

श्रीपतिः—

सौम्याश्विनितिष्यश्रवणाश्रविष्ठाहस्तध्रुवत्वाष्ट्रमपूषभाणि ।
मैत्रेण युक्तानि नरेश्वराणां विलोकनेभानि शुभप्रदानि ॥ १५७ ॥

अथ महादानम्—

पुण्यान्तिथिं समासाद्य कृत्वा ब्राह्मणवाचनम् ।
अयने विषुवे चैव व्यतीपाते दिनक्षये ॥ १५८ ॥
युगादिपूपरागे तु तथा मन्वन्तरादिषु ।
सक्रान्तौ वैधृतिदिने चतुर्दश्यष्टमीषु च ॥ १५९ ॥
सितपक्षदशीपर्वद्वादशीष्वष्टकासु च ।
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ॥ १६० ॥
द्रव्यब्राह्मणसंपत्तौ श्रद्धा वा यत्र जायते ।
महादानानि देयानि संशयं भयभीरुणा ॥ १६१ ॥

अथ दीक्षाकालः—

मन्त्रमुक्तावल्याम्—

चैत्रे दुःखाय दीक्षा स्याद्वैशाखे सर्वसिद्धिदा ।
ज्यैष्ठे मृत्युप्रदा सा स्यादाषाढे बन्धुनाशिनी ॥ १६२ ॥

श्रावणे बुद्धिदात्री स्यान्नभस्ये दुःखदा मता।
आश्विने सर्वसिद्ध्यै स्यात्कार्तिके ज्ञानवर्द्धिनी ॥ १६३ ॥
शुभदा मार्गशीर्षे च पौषे ज्ञानविनाशिनी।
माघे मेधाभिवृद्धिः स्यात्फाल्गुने विजयप्रदा ॥ १६४ ॥

सिद्धान्तशेखरे—

निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा।
पञ्चम्येकादशी शुक्ला सप्तमी च त्रयोदशी ॥ १६५ ॥
दशमी शुक्लपक्षस्य द्वादशी तु विशेषतः।
तृतीया विहिता नित्य षष्ठी सर्वत्र निन्दिता।
अनायुष्या स्मृता लोके तस्मात्ता परिवर्ज्जयेत् ॥ १६६ ॥

रामार्चनचन्द्रिकायाम्—

रवौ गुरौ सिते सोमे कर्तव्या बुधशुक्रयो।
अश्विनी रोहिणी स्वाती विशाखा हस्तभेषु च ॥ १६७ ॥
ज्येष्ठा धनिष्ठा मघामूल - श्रवण स्योडु गणेषु च।
शुभयोगेषु सर्व्वेषु दीक्षा सर्वफलप्रदा ॥ १६८ ॥
शुभानि करणान्याहुर्दीक्षायान्तु विशेषत ॥ १६९ ॥

शिशुबोधिन्याम्—

रोहिणी मृगशिराश्चित्रानुराधा चोत्तरात्रयम्।
रेवत्याश्च तथा वारे चन्द्रे शुक्रे तथा गुरौ ॥ १७० ॥
तिथौ शस्ते स्थिरे लग्ने शुभे चन्द्रे च शस्यते।
लग्ने या च चतुर्थे वा सप्तमे दशमेऽपि वा ॥ १७१ ॥
पञ्चमे नवमे वापि शस्यते वा शुभग्रह।
त्रिषडेकादशे चैव न पापोपग्रहे तथा ॥ १७२ ॥
माघफाल्गुनवैशाख श्रवणादिरन कार्त्तिका।
सप्त मासास्तथा मार्गा मन्त्रारम्भे बुधैः सदा ॥ १७३ ॥

अथ वापीकूपतडागादीनामारम्भ। तत्र वापीखननमाह।

ऋक्षोच्चये—

स्वात्यश्विपुष्यहस्तेषु सर्वदा च पुनर्वसौ।
रेवत्या वारुणे चैव वापीकर्म प्रशस्यते ॥ १७४ ॥

अथ कूपारम्भमाह श्रीपतिः —

हस्तः पुष्यो वासव वारुणञ्च मैत्र पित्र्य त्रीणि चैवोत्तराणि।

प्राजापत्यञ्चापि नक्षत्रमाहुः कूपारम्भे श्रेष्ठमाद्या मुनीन्द्राः ॥१७५॥

तडागारम्भमाह वशिष्ठ —

मैत्रेन्दुपौष्णोत्तररोहिणीषु देवेज्यवारे चरवारिभेषु ।
प्रारम्भणं सर्वजलाशयानां कार्यं सितेन्दुशकवारलग्ने ॥ १७६ ॥

व्यवहारतत्त्वे—

अथाप्याम्बुपान्त्यपितृमित्रवसूत्तरार्के
ऐन्द्रीज्यभेषु खननं सलिलाश्रयाणाम् ॥ १७७ ॥

रत्नमालायाम्—

लग्ने जीवे ज्ञेऽथवा दुर्बलैश्च क्रूरे शुभे चापि मेषूरणस्थे ।
आप्या चन्द्रे सर्वतोयाशयानामारम्भाः स्युः सिद्धये निर्विकल्पकम् ॥१७८॥

कश्यपेनाप्युक्तम्—

गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते विधौ ।
आप्यभे जलकार्याणामारम्भः सिद्धिदः स्मृतः ॥ १७९ ॥

रत्नावल्याम्—

कूपारम्भे प्रतिष्ठायामथवा हर्म्यकर्मणि ।
भान्वृक्षेन्दुमुहूर्त्तानां फलं योगस्य शस्यते ॥ १८० ॥
मार्गफाल्गुनवैशाखाषाढकार्तिकश्रावणे ।
हरिशयनातिरिक्ते च शुक्लपक्षे विशुद्धके ॥ १८१ ॥
रविगुर्विन्दुताराणां विशुद्धयारम्भयेद्बुधः ।
वापीकूपतडागानां ज्योतिःशास्त्रविशारदैः ॥ १८२ ॥

गणपतिः —

अनुराधामघाहस्तरेवत्यामुत्तरात्रये ।
रोहिणीयुगले पुष्ये धनिष्ठाद्वितये तथा ॥ १८३ ॥
पूर्वाषाढाभिधे ये च शुभे मासे शुभे दिने ।
वापीकूपतडागानामारम्भः कथितो बुधैः ॥ १८४ ॥

अथ जलाशयसुरारामप्रतिष्ठा प्रदीपिकायाम्—

मार्तण्डेन्द्वोर्विशुद्धौ सुरजिदशयने माघषट्कस्य शुक्ले
मूलाषाढोत्तराश्विश्रवणगुरुकरे पौष्णशाक्राजचान्द्रे ।
मैत्रे ब्राह्मे च पूर्णामदनरवितिथौ सद्द्वितीयातृतीये
कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ॥१८५॥

मुरभिद्विष्णुः तस्य अशयने शयनाभावे विष्णुशयनव्यतिरिक्ते काले इत्यर्थः —

गार्ग्यः—

देवतारामवाप्यादिप्रतिष्ठामुत्तरायणे ।
माघादिपञ्चमासेषु कृष्णाद्यापञ्चमीदिने ।
दक्षिणे त्वयने कुर्वन्न तत्फलमवाप्नुयात् ॥ १८६ ॥

मत्स्यपुराणे—

चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवेऽपि वा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ।
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ॥ १८७ ॥

भविष्यपुराणे—

तस्मिन्सलिलसम्पूर्णे कार्तिके च विशेषतः ।
तडागस्य विधिं कार्यं स्थिरनक्षत्रयोगतः ॥ १८८ ॥

अग्निपुराणे—

वापीकूपतडागानां तस्मिन्काले विधिः स्मृतः ।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥ १८९ ॥
कर्कटे पुत्रलाभश्च सौख्यन्तु मकरे भवेत् ।
मीने यशोर्थलाभश्च कुम्भे च सुबहूदकम् ॥ १९० ॥
वृषे च मिथुने चैव वृश्चिके च जलम्भवेत् ।
पितृतृप्तिस्तु कन्यायां मघायां शाश्वती गतिः ॥ १९१ ॥
सिंहे मेषे धनुर्लग्ने लक्ष्मीश्च द्विज गच्छति ॥ १९२ ॥

देवप्रतिष्ठायां विशेषस्तत्र वसिष्ठः—

अथ प्रतिष्ठां कथयामि सम्यक्
शिवस्य विष्णोस्त्वथ वा परेषाम् ।
सौम्यायने देवगुरौ च शुक्रे
सदृश्यमाने परिचारकाणाम् ॥ १९३ ॥

अत्र सौम्यप्रकृतीनां देवानामुत्तरायणे स्थापनमुक्तम् । उग्रप्रकृतीनान्तु दक्षिणायनेऽपि स्थापनं कार्यम्,

तदुक्तं वैखानससंहितायाम्—

मातृभैरववाराहनारसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥ १९४ ॥

शैवसिद्धान्तशेखरे तु—

श्रेयोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छता ।
दक्षिणे च मुमुक्षूणा मलमासे न सा द्वयो ॥ १९५ ॥

वशिष्ठः—

मासे तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्तुं ।
चैत्रे महारुभयदा च शुक्रे समाधव पुत्रधनप्रदा स्यात् ॥ १९६ ॥

नारदोपि—

विचैत्रेषु च मासेषु माघादिषु च पञ्चसु ॥ १९७ ॥

वशिष्ठ —

आषाढमासादिचतुष्टयेपि
फलत्रसन्तानविनाशदा स्यात् ॥
ऊर्जे च कर्तुर्निधनप्रदा च
सौम्ये सपौषेऽखिलदुःखदा स्यात् ॥ १९८ ॥

वलक्षपक्ष शुभद समस्त सदैव तत्राद्यदिन विहाय ।
अन्त्यत्रिभाग परिहृत्य कृष्ण पक्षोपि शस्त खलु पक्षयोश्च ॥१९९॥
रिक्तावमत्यक्तदिनेषु निन्द्य योगेषु वैनाशिकवर्जितेषु ।
दिने महादोषविवर्जिते च शशाङ्कताराबलसयुते च ॥ २०० ॥

वैनाशिकनक्षत्राणि नारदेनोक्तानि—

जन्मभाद्दशम कर्म सघातर्क्षन्तु षोडशम् ।
अष्टादश सामुदाय त्रयोविंश विनाशभम् ।
मानस पञ्चविंशर्क्षं नाचरेच्छुभकर्मसु ॥ २०१ ॥

अथ तिथीनाह नारद —

यद्दिन यस्य देवस्य तद्दिने तस्य सस्थिति ।
द्वितीयादिद्वयो पञ्चदश्यादितिसृषु क्रमात् ॥ २०२ ॥

दशम्यादिचतसृषु पौर्णमास्या विशेषत ।
कुजवर्जितवारेषु कर्तु सूर्यबलप्रदे ॥ २०२ ॥
चन्द्रताराबलोपेते पूर्वाह्णे शोभने दिने ॥ २०३ ॥

प्रत्येकं वारफलमाह वशिष्ठ —

कीर्तिप्रद क्षेमकर कृशानुभयप्रद वृद्धिकर हर च ।
लक्ष्मीकर सुस्थिरद रविनादिवारेषु सस्थापनमामनन्ति ॥ २०४ ॥

अथ देवप्रतिष्ठार्थं नक्षत्राणि वसिष्ठेनोक्तानि—

हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु ।
स्यादुत्तराधारुद्रशाङ्कभेषु सर्व्वामरस्थापनमुत्तमं तत् ॥ २०५ ॥

अथ देवतापट्टनमुहूर्त्तं दीपिकायाम्—

ध्रुवमृदुलघुवर्गे विष्णुदैवे च भे च
मरुददितिधनिष्ठे शोभने वासरे च ।
त्रिदशमदनजन्मैकादशे शीतरश्मौ
विबुधसुकृतिरिष्टा नाडिनक्षत्रहीने ॥ २०६ ॥

श्रीपतिः—

सिंहोदये दिनकरो मिथुने महेशो
नारायणश्च युवतौ घटभे विधाता ।
देव्यो द्विमूर्तिभवने च निवेशनीयाः
क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः ॥ २०७ ॥

पुष्पश्रुत्यभिजित्सुरेश्वरकयोर्वित्ताधिपस्कन्धयो-
र्मैत्रे तिग्मरुचे करे निऋतिभे दुर्गादिकानां शुभम् ॥ २०८ ॥

सप्तर्षयो यत्र चरन्ति धिष्ण्ये कार्य्या प्रतिष्ठा खलु तत्र तेषाम् ।
श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणाम् ॥२०९॥

सप्तर्षयस्तु—

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः ॥ २१० ॥

इतिस्मृतेः ।

गणपरिवृढरक्षोयक्षभूतासुराणां
प्रमथफणिसरस्वत्यादिकानाञ्च पौष्णे ।
श्रवसि सुगतनाम्नो वासवे लोकपानां
निगदितमखिलानां स्थापनं हि स्थिरेषु ॥ २११ ॥

अथ सेतुबन्धनं देवशमनोहरे—

स्वातीशुक्रे मन्दवारे शुभे लग्ने शुभे दिने ।
सेतूनां बन्धनं कार्य्यं ध्रुवभे चाथ जीवयोः ॥ २१२ ॥

अथ क्रयविक्रयौ—

रोहिणीमृगपुष्येषु तथा भाद्रपदद्वये ।
मूलहस्तोत्तराषाढा फाल्गुनी पूर्वसंयुता ॥ २१३ ॥

निश्रये सर्वयस्तूना अनुराधा तथा परा।
भवन्ति सवतो लाभा वाराहस्य मत तथा ॥ २१४ ॥
पूर्वात्रयाग्नियाम्येषु विशाखादिचतुष्टये ।
विक्रीत लाभकृद् द्रव्य क्रीत हानिकर भवेत् ॥ २१५ ॥
भाद्रद्वयत्रिदशमन्त्रिदिवाकरेषु
मूलानिलोत्तरतुरङ्गमरेवतीषु ।
सारगपाणिरजनीकरमन्त्रिभेषु
लाभ सदैव भवति क्रयविक्रयाणाम् ॥ २१६ ॥

देवज्ञमनोहरे—

दासीदासादिभृत्याना कुर्यात्सग्रहण बुध ।
स्थिरे लग्ने शुभैर्दृष्ट मन्दवारे विशेषत ॥ २१७ ॥

गणपति —

उत्तराया च रोहिण्या दासदास्यादिसग्रह ।
शुभे योगे शुभतिथौ समाह्य दासदासिकम् ॥ २१८ ॥

अथ वस्त्रक्रयणम्—

चित्रा शतभिषा स्वाती रेवती चाश्विनी शुभा ।
श्रवणा च तथा प्रोक्ता वस्त्राणा क्रयणे शुभा ॥ २१९ ॥

अथ दुन्दुभिमृदगादिकरवाद्यम् । गणपतिः—

हस्तत्रयेऽनुराधान्त्ये पुनर्वसुमृगाश्विभे ।
श्रवणत्रये मृगेऽर्केऽह्नि शुभे पूर्णा जयासु च ।
शुभ दुन्दुभिभेर्यादिकरवाद्य समीरितम् ॥ २२० ॥

अथ वक्त्राद्य मुखवाद्यम्—

ज्येष्ठार्द्राभरणीमूलपूर्वाश्लेषामघासु च ।
रिक्तातिथौ च पापाहे मुखवाद्य प्रशस्यते ॥ २२१ ॥

अथ मृगया--

आश्लेषाभरणीपूर्वाज्येष्ठार्द्रास्वातिमूलभे ।
विशाखायाञ्च पापाहे मृगयाखेटके नृप ॥ २२२ ॥

अथ जलनपुटे यन्त्र —

आश्लेषापूर्वामघामूले शते पुष्येन्दुचारिणी ।
लग्नेऽर्यार्किकुजे च रे जलयन्त्रक्रिया शुभा ॥ २२३ ॥

अथ मोदकवस्तुभक्षणम्—

आर्द्राश्लेषामघापूर्वाज्येष्ठामूलशताभिधाः ।
भरण्या सुदिने नन्दे स्वश्नीयान्मोदकं जनः ॥ २२४ ॥

अथ नवान्ननाभोगः—

प्रथमाभिगमः शस्तो नववध्वा शुभेऽहनि ।
गर्भाधानोक्तनक्षत्रे शस्ते ज्योत्स्नाकरे निशि ॥ २२५ ॥

इति सर्वं मुहूर्तगणविवचनम् ।

अथ नौकाघटनं दीपिकायाम्—

शुभहरिघटलग्ने शक्रपित्र्ये द्विदैवे
त्रिनयनविधियाम्यद्वन्द्वसर्पान्त्यभेषु ।
शुभकरतिथियोगे शुक्रजीवार्कवारे
तरणिघटनमिष्टं चन्द्रताराविशुद्धौ ॥ २२६ ॥

अथ घटनस्थानान्नौचालनं दीपिकायाम्—

शुभाहे विष्णु युग्मेन्द्र भगमैत्राश्विनीषु च ।
चालनं घटनस्थानान्नावः शुभतिथीन्दुषु ॥ २२७ ॥

अथ नौयानं तत्रैव—

अश्विकरेज्यसुधार्निधिपूर्वामित्रधनाच्युतभेषु भलग्ने ।
तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभतारे ॥ २२८ ॥

अथ वीरसाधनम् । तत्र वसिष्ठ —

शशिनैर्ऋतियमपितृभेष्वष्टमशुद्धौ भृगौ च पाताले ।
घटलग्नगते शशिजे निखिला वेतालसिद्धिः स्यात् ॥ २२९ ॥

रत्नमालायाम्—

पित्र्येशयाम्यमूलेन्दुभेषु शुद्धेऽष्टमेऽपि च ।
वेतालसिद्धिः पाताले भृगौ ज्ञे घटलग्नगे ॥ २३० ॥

अथ गोक्रयविक्रयौ रत्नमालायाम्—

शाक्रवासवकरेषु विशाखापुण्यवारुणपुनर्वसुभेषु ।
अश्विपूषयुतेषु विधेयः क्रयविक्रयविधिः सुरभीणाम् ॥ २३१ ॥

अथ पशुस्थिति । तत्र श्रीपति —

शुभग्रहोदये शस्ते नैधने स्वर्क्षयोनिषु ।
रक्षावृद्धिक्रिया शान्ता पशूनां मुनिभिः स्मृता ॥ २३२ ॥

अथ पशुयात्रा । तत्र वशिष्ठ —

त्वाष्ट्रश्रवःश्रीपतिभेषु रिक्ता दर्शाष्टमीभौमदिने पशूनाम् ।
यात्राप्रवेशं न कदाचिदेव कुर्य्याच्च तेषामभिवृद्धिकाङ्क्षी ॥ २३३ ॥

व्यवहारतत्त्वे —

स्वयोनिधिष्ण्ये त्रिकुजे पशूनां कर्म्माथ कुर्य्याद्बुधेन्दुमन्दे ।
यानं प्रवेशं च तिथावदर्शे चित्रोत्तरावैष्णवमन्त्यभेषु ॥ २३४ ॥
अत्रैवं चतुर्दशीरहिते उदग्भूमनस्तादमावास्यादिरहितेपि ।

व्यवहारोच्चये —

पूर्व्वात्रये धनिष्ठेन्दुपौष्णे सौम्यविशाखयोः ।
आर्द्रेषायाममयाश्विन्यां यात्रासिद्धिश्चतुष्पदाम् ॥ २३५ ॥

अथ पशुदमनम् । शिशुबोधिन्याम् —

अश्विनीरेवतीचित्रानुराधामृगशिरास्तथा ।
हस्तं पुनर्वसुश्चापि स्वाती पुष्यस्तथैव च ॥ २३६ ॥
बुधे चन्द्रे गुरौ शुक्रे रिक्तावर्ज्यतिथौ पुनः ।
अष्टमीञ्च कुहूञ्चैव वर्जयित्वा शुभम्भवेत् ।
दमनं पशुवर्गाणां कथितं सूरिभिः सदा ॥ २३७ ॥

अथोष्ट्रमहिष्यादिकृत्यम् । तत्र गणपति —

धनिष्ठाद्वितये पूर्वाषाढातिर्य्यङ्मुखोडुषु ।
अजाविमहिष्युष्ट्राणां कृत्येषु चाश्विनीशुभम् ॥ २३८ ॥

अथ पक्षिकृत्यम् —

शुभाहे सरवौ तिर्यङ्मुखे चोर्ध्वमुखेपि भे ।
सारिकाशुकमुख्यानां पक्षिणां कृत्यमुत्तमम् ॥ २३९ ॥

वृक्षाद्युप्त्यादिनक्षत्र मुहूर्तचिन्तामणौ —

मूलाहिमिश्रोग्रमघोमुखम्भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम् ।
तिर्य्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृशकृत्यमेषु सत् ॥२४०॥

अथ वृक्षरोपणं । तत्र गणपति —

हस्तचित्रोत्तरामूलेऽनुराधारेवतीद्वये ।
विशाखारोहिणीपुष्ये लतारामोऽथ मृगेऽशते ॥ २४१ ॥

अथ मैत्रकरणमाह, गणपतिः—

हस्तत्रयेऽनुराधायां मूले पुष्ये श्रवत्रये ।
मृगभे रेवतीयुग्मे पुनर्वस्वार्द्रिजन्मभे ॥ २४२ ॥

ज्ञेन्दुशुक्रेज्यसूर्य्याणां वासरे सत्तिथावपि ।
द्विस्वभावे शुभे लग्ने शुद्धे धूनमृतिव्यये ।
मैत्रकरणं प्रोक्तं योगे च पुष्टिदायिनि ॥ २४३ ॥

अथ रसोत्पादनम्—

विशाखाकृत्तिकामूले धनिष्ठाश्विकरे मृगे ।
ज्येष्ठायां भाद्रभे सौम्यवासरेषु रसक्रिया ॥ २४४ ॥

अथ रससेवनम्—

हस्तत्रयेऽश्विनीपुष्येऽनुराधात्रये श्रवत्रये ।
पुनर्भे मृगशीर्षेऽर्के भौमेज्ये रसभक्षणम् ॥ २४५ ॥

अथ वातरोगादौ तैलोपवेशनम्—

हित्वाश्लेषामघामूल विशाखाभरणीद्वयम् ।
मन्देज्ये ज्ञे दिने तैलं तृतीयादित्रिके तिथौ ॥ २४६ ॥

इति गणपतिवचनम् ।

अथ सेवाचक्रम्—

सेवाचक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे ।
पादयोः सप्तऋक्षाणि साभिजिद्विन्यसेद् बुधः ॥ २४७ ॥

फलम्—

स्वामिभाद्गण्यते मृत्यं मृत्यभात् स्वामिनन्ततः ।
निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे ॥ २४८ ॥

अथ गजादिपशुकृत्यम् । तत्र श्रीपतिः—

हस्तेषु चित्रासु तथाश्विनीषु स्वातौ च पुष्ये च पुनर्वसौ च ।
प्रोक्तानि सर्वाण्यपि कुञ्जराणां कर्माणि गर्गप्रमुखैः शुभानि ॥२४९॥

शुभतारे शुभे लग्ने शुभांशे शोभने तिथौ ।
अङ्कुशाः करिणां योज्याः शनिलग्ने शनेर्दिने ॥ २५० ॥

पुष्यार्कविष्ण्वश्विनिसौम्यभेषु पौष्णानि चादित्यवसुद्वयेषु ।
सवारुणर्क्षे च बुधैः स्मृतानि सर्वाणि कार्याणि तुरङ्गमाणाम् ॥२५१॥

अथ परीक्षाकालो दीपिकायाम्—

नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ।
नाडीनक्षत्रहीने सुरगुरुजनीनाथताराविशुद्धौ
प्रातः कार्य्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने ॥ २५२ ॥

व्यवहारोच्चये—

अष्टम्याञ्च चतुर्दश्यां प्रायश्चित्तपरीक्षणे।
न परीक्षाधिवासश्च शनिभौमदिने भवेत् ॥ २५३ ॥
ज्येष्ठाश्रवणहस्तश्च तथा ज्ञेयः पुनर्वसुः।
तद्वच्छतभिषा प्रोक्ता त्वभियुक्तविचारणे ॥ २५४ ॥

अथ मैत्री। रत्नमालायाम्—

भाग्य मैत्र शीतरश्मौ सपुष्पे द्वादश्यां वा शुक्रदृष्टे च लग्ने।
अष्टम्यां वा तैतिलाख्ये प्रदिष्टा पूर्वाचार्य्यैस्तत्र सन्धानसिद्धिः ॥२५५॥

अथ शिल्पकरण, तत्र कश्यपः—

लग्नधर्म्मगते सौम्ये जीवे वा मृतदोषितौ।
तयोर्वर्गे स्थिते शिल्पे विद्यारम्भः प्रशस्यते ॥ २५६ ॥

अथ रोगिस्नान रत्नमालायाम्—

इन्दोर्वारे भार्गवे च ध्रुवेषु सर्पादित्यस्वातियुक्तेषु भेषु।
पित्र्ये चान्ये चैव कुर्य्यात्कदाचिन्नैव स्नान रोगनिर्मुक्तजन्तोः ॥२५७॥

नारदसंहितायाम्—

स्थिरेज्यादितिसार्पान्त्यपितृवारुणभेषु च।
न कुर्य्याद्रोगमुक्तस्तु स्नानं वारेऽब्जशुक्रयोः ॥ २५८ ॥

अर्थादन्यनक्षत्रादिषु कार्यमित्यर्थः—

कश्यपेनापि—

पितृमारुतसर्प्पान्त्यस्थिरर्क्षेष्विन्दुशुक्रयोः।
न कुर्य्याद्वारयो रोगमुक्तस्नानं कदाचन ॥ २५९ ॥

अत्र लग्नादिशुद्धिमाह, श्रीपतिः—

लग्ने चरे सूर्य्यकुजेज्यवारे रिक्तातिथौ चन्द्रबले च हीने।
ऐन्द्रत्रिकोणायगतैश्च पापै स्नान हित रोगविमुक्तकानाम् ॥ २६० ॥

दीपिकायान्तु विशेष —

न्यादित्येषु चरेषु शक्रदिनकृत्पुष्यप्रिचन्द्रेषु च
क्रूराहे व्यतिपातविष्टिदिवसेष्विन्दौ वशस्ते तिथौ।
केन्द्रस्थेषु शुभेषु कामतिथिषु स्नान गदान्मुक्तिद
शस्त नात्र सुशोभना विधिभुनक्षर्क्षेषु सद्वासवाः ॥ २६१ ॥

अथ नित्यक्षौर, तत्र श्रीपतिः—

पुष्ये पौष्णे चाश्विनीष्वैन्दवे च शाक्रे हस्तादित्रिके भेऽप्यदित्याम्।
क्षौरं कार्य्यं वैष्णवाद्ये त्रये च मुक्त्वा भौमादित्यपावङ्गिवारान् ॥२६२॥

वसिष्ठ —

हस्तत्रये पुष्यपुनर्वसौ च शशाङ्कविष्णुत्रितयेऽश्विनीषु।
पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं ज्यर्कारशन्यंशकवारलग्ने ॥२६३॥

व्यास —

चतुर्थीञ्चैव षष्ठीञ्च अष्टमीञ्च चतुर्दशीम्।
तथा पञ्चदशीञ्चैव ब्रह्मचारी भवेत्सदा ॥ २६४ ॥
श्मश्रुकर्मशिरोऽभ्यगदन्तधावनमैथुनम्।
जन्तुश्चैतानि यः कुर्य्याल्लक्ष्मीस्तत्र न तिष्ठति ॥ २६५ ॥

वराह.—

न स्नानमात्रगमनोत्कटभूषिताना-
मभ्यक्तभुक्तरणकालनिरासनानाम्।
सन्ध्यानिशाशनिकुजार्कदिने च रिक्ते
क्षौरं हितं न नवमेह्नि न चापि विष्ट्याम् ॥ २६६ ॥

वृद्धगर्गः—

जन्मारकविवारेषु रात्रौ जाते व्रतेऽहनि।
श्राद्धाहे प्रतिपद्रिक्तामद्रा क्षौरे विवर्ज्जयेत् ॥ २६७ ॥
षष्ठयमापूर्णिमापातश्चतुर्दश्यष्टमी तथा।
आसु सन्निहितं पापं तैले मांसे क्षुरे भगे ॥ २६८ ॥

मरीचि —

षष्ठ्या पर्व्वसु पक्षादौ रिक्तामद्रातिथिष्वपि।
यागे श्राद्धे विवाहे च क्षौरं वर्ज्यं निशासु च ॥ २६९ ॥

श्रीपतिः—

षटकृत्तिक पञ्चमघस्त्रिमैत्रो ब्रह्माष्टको यश्चतुरुत्तरश्च।
क्षौरी स वर्षं चतुराननोपि प्राप्नोति मृत्योः सदनं मनुष्यः ॥२७०॥

अथ श्मश्रुकर्म आह, श्रीरतिः—

श्मश्रुकर्म पञ्चमेऽथ पञ्चमेऽह्नि भूभृताम् ।
क्षौरभस्य चोदये विनिन्द्यनारका न चेत् ॥ २७१ ॥
उत्तरात्रितयपूर्वरोहिणीयाम्यसर्पपितृभेषु चाग्निभे ।
श्मश्रुकर्म सकल विवर्जयेत्प्रेतकार्य्यमपि बुद्धिमान्नरः ॥२७२॥

अथ काञ्जिकाधारणमाह, चण्डेश्वरः—

मूलेन्द्ररुद्रश्रवणार्कपौष्णविश्वेसवित्रानलरेवतीषु ।
संस्थाप्य काञ्जीकमकुण्डिकायां वारे रविभूमिसुतस्य शस्तम्॥२७३॥

अथेन्धनसंग्रह —

ब्रह्मानिशार्कमघमूलत्रिमैत्ररौद्र
पौष्णानुराधगुरुविष्णुविशाखयुक्ते ।
वारे कुजार्कभृगुनन्दनसोमजानां
श्रेष्ठेन्धनस्य करण भवति प्रशस्तम् ॥ २७४ ॥

अथ लवणकृत्यं मुहूर्त्तगणपतौ—

लवणारम्भकृत्यन्तु भरणीरोहिणीश्रवे ।
शनिवारे दिवा श्रेष्ठ जन्मराशौ शनेर्बले ॥ २७५ ॥

अथ तैलयन्त्रकृत्यम्—

धनिष्ठाश्विकरे चित्रानुराधा पुष्यभे तथा ।
ज्येष्ठायाञ्च पुनर्वस्वो रेवत्यां शुभवासरे ॥
तैलयन्त्रक्रिया शस्ता हित्वा रिक्तामभामपि ॥ २७६ ॥

अथ कुम्भकारकृत्यम्—

पुनर्वसुद्वये हस्तत्रयेऽन्त्ये रोहिणीमृगे ।
अनुराधाश्रवे ज्येष्ठे ससूर्ये सौम्यवासरे ॥
तथा चरोदये प्रोक्ता कुम्भकारक्रिया बुधैः ॥२७७॥

अथ काष्ठादिशिल्पकृत्यम्—

हस्तषट्केश्विनीपुष्यरेवतीश्रवणत्रये ।
पुनर्भे रोहिणीयुग्मे सूत्रधारक्रियोत्तमा ॥ २७८ ॥

अथ स्वर्णकारकृत्यम्—

श्रवत्रयेऽश्विनीपुष्ये मृगे हस्तचतुष्टये ।
कृत्तिकायां पुनर्वस्वोः शुभलग्ने तिथावपि ॥
हेमकारक्रिया शस्ता हित्वा बुधशनैश्चरौ ॥ २७९ ॥

अथ लौहाश्ममणिकृत्यानि—

स्वाती ज्येष्ठाद्वये मूले चित्राद्रीभरणीत्रये ।
मणिलौहाश्मना कृत्य पापे चाहि स्थिरोदये ॥२८०॥

अथ नापितकृत्यम्—

ज्येष्ठाहस्तत्रये कर्णत्रितयेऽश्विमृगान्त्यभे ।
पुनर्वसुद्वये हित्वा रिक्ताशेषाष्टमी तिथिः ।
सद्वारे नापितानाञ्च क्षुरादिसकला क्रिया ॥२८१॥

अथाभीरकृत्यम्—

विशाखायां पुनर्भान्त्ये ज्येष्ठाहस्ताशिवमीमृगे ।
पूभाकर्णत्रये पुष्ये ज्येष्ठेऽर्के वल्लवक्रिया ॥ २८२ ॥

अथ चौरकृत्यम्—

विशाखा कृत्तिका पूर्वा मूलाद्रा भरणीमघे ।
अश्लेषाज्येष्ठयोर्नन्दाभौमयोः शाकुने बले ।
लग्ने वा दशमे भौमे चौर्यञ्च द्रव्यलब्धये ॥ २८३ ॥

अथ रोगनिर्मुक्तस्य बहिर्गमनम्—

सद्वारे गमनोक्तर्क्षे सत्तिथौ शोभने विधौ ।
सल्लग्ने रोगमुक्तस्य बहिर्निस्सरण शुभम् ॥ २८४ ॥

अथ मल्लक्रिया—

ज्येष्ठाद्रीभरणीपूर्वामूलाश्लेषामघाभिधे ।
जयापूर्णासु सद्वारे सार्के शीर्षे दियेन्द्रके ॥
सत्खेटैः केन्द्रगैः सार्के प्रोक्ता मल्लक्रिया शुभा ॥ २८५ ॥

अथ विपणिमाह, रत्नमालायाम्—

कुम्भराशिमपहाय साधुषु द्रव्यकर्मभवमूर्त्तिवर्त्तिषु ।
अव्ययेषु शुभदायिपूद्गमे भार्गवे विपणिरिन्दुसंयुते ॥ २८६ ॥

मुहूर्तचिन्तामणौ—

रिक्ताभौमघटान्विना च विपणिर्मैत्रध्रुवक्षिप्रभे ।
लग्ने चन्द्रसिते व्ययाष्टरहितैः पापैः शुभैर्द्व्यायगे ॥ २८७ ॥

अथ राजसेवा, तत्र गणपतिः—

हस्तद्वयेऽनुराधायां रेवतीयुगले मृगे ।
पुष्ये गुरौ बुधे शुक्रे सत्तिथौ रविवासरे ।
योनिराशिपयोर्मैत्र्यां स्वामी सेव्योऽनुजीविभिः ॥ २८८ ॥

अथ राजच्छत्रचामरसिंहासनादिः—

चामरच्छत्रदोलादिद्वीपिसिंहासनादिकम् ।
पट्टाभिषेकभे सर्वं विदध्याच्छोभनेऽहनि ॥ २८९ ॥

अथ मुद्राकरणम् —

त्र्युत्तरे चानुराधाया श्रवणात्रितये तथा ।
पुनर्व्वसुद्वये हस्तत्रये च रेवतीयुगे ॥ २९० ॥
मृगशीर्षे च रोहिण्यामश्मोपद्मर्मोदिने ।
तृतीयाया त्रयोदश्या दशम्या पूर्णिमातिथौ ।
त्यक्त्वा शनैश्चर सोम मुद्राकार्यं शुभप्रदम् ॥ २९१ ॥

अथ शिविकारोहणम्—

उत्तरारेवतीयुग्मे त्रिभे हस्तत्रिभे श्रवात् ।
पुनर्वस्वोस्तथा पुष्येऽनुराधाद्वितये मृगे ॥
रोहन शिविकायास्तु सल्लग्ने घटनन्तथा ॥ २९२ ॥

अथ पल्याणादिनिर्माणम्—

श्रवणे शतभे हस्ते पुष्ये मूले मृगेऽश्विभे ।
पुनर्वसौ कुनाश्वोष्ट्रपल्याणकरण शुभम् ॥ २९३ ॥

अथ रथकृत्यम्—

पुष्ये पुनर्व्वसौ ज्येष्ठानुराधारेवतीद्वये ।
श्रोत्रादिकत्रिभे हस्तत्रितये रोहिणीमृगे ।
सार्कसौम्यदिने तेषा विलग्ने रथकर्मकृत् ॥ २९४ ॥

अथ कोपसग्रह, तत्र नृसिंह —

रौद्रश्रवणपुष्येन्दुमैत्रवासववारुणम् ।
त्र्युत्तराणि च हस्तश्च कोपसग्रहणे शुभा ॥ २९५ ॥
दर्शाष्टपर्वरिक्ताश्च वर्ज्या शेषा शुभावहा ।
शुभग्रहाणा वाराश्चैत्रे वर्गादये शुभा ॥ २९६ ॥

अथ नि क्षेप —

पुनर्वसुविशाखार्द्राचित्रा चन्द्रो यमो मघा ।
दत्त प्रयुक्त निःक्षिप्त न प्राप्तो निधन धनी ॥ २९७ ॥
भरणोत्रीणि पूर्वाणि चार्द्राश्लेषा मघा तथा ।
चित्रा ज्येष्ठा विशाखा च मूलमेकादश स्मृतम् ॥ २९८ ॥

श्रीधरः—

वागोशमन्दृदिवसांशकलग्नयुक्ते
रिक्तासु मन्ददिवसे कुलिकोदयेऽपि।
मैत्रद्वितीयपदमैत्रमुहूर्त्तयुक्ते
राश्युद्गमे च ऋणमोक्षमुशन्ति सन्तः॥ २९९॥

अथ द्रव्यप्रयोग, भीमपराक्रमे—

मृदुपुष्याश्विनी चैव विशाखा श्रवणत्रयम्।
पुनर्वसौ च शंसन्ति धनादिनिधिवर्त्तनम्॥ ३००॥

वर्त्तनम् ऋणरूपेणादानम्।

रत्नमालायाम्—

शुद्धेषु धर्मात्मजनैधनेषु चरे विलग्ने द्रविणप्रयोगः॥ ३०१॥

अथ ऋणग्रहणनिषेधो ज्योतिःप्रकाशे—

ऋणं भौमे न गृह्णीयान्न देयं बुधवासरे।
ऋणच्छेदं कुजे कुर्यात् सञ्चयं सोमनन्दने॥ ३०२॥
हस्तेऽर्कवारे संक्रान्तौ यदृणं स्यात्कुलेषु तत्।
वृद्धियोगे तथा ज्ञेयमृणच्छेदन्तु कारयेत्॥ ३०३॥

अथ स्त्रीणां मङ्गलस्नाननिषेधः, तत्र चण्डेश्वरः—

स्नानं करोति या नारी चन्द्रे शतभिषान्विते।
सप्तजन्म भवेद्वन्ध्या विधवा दुर्भगा भृशम्॥ ३०४॥
स्त्रीणां शतभिषक्स्नानं प्रमादाद्यदि जायते।
संक्रान्त्यां पञ्चदश्याञ्च द्वादश्याञ्च रवेर्दिने।
वस्त्रं निष्पीडयेन्नैव क्षीरेणापि न योजयेत्॥ ३०५॥

अथ प्रेतश्राद्धमाह गर्गः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे॥ ३०६॥

ज्योतिःपराशर—

साधारणे ध्रुवोमे मैत्रे नो शस्यते मनुष्याणाम्।
*प्रेतक्रियां कथंचित् त्रिपुष्करे यमलदिवसे वा॥ ३०७॥*

धमानि पूर्वात्रयं भरणी मघा च मैत्रानुराधारेवत्यः।

वराहः—

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत्।
प्रेतकृत्यं व्यतीपाते वैधृते परिघे तथा॥ ३०८॥

करणे विष्टिसञ्ज्ञे तु शनैश्चरदिनेपि च।
त्रयोदश्यां विशेषेण जन्मतारात्रये तथा ॥ ३०९ ॥

कश्यपः—

भरण्यार्द्रा मघाश्लेषा मूलं त्रिचरणानि च।
प्रेतक्रियाऽतिदुष्टानि धनिष्ठाद्यश्च पञ्चकम् ॥ ३१० ॥
फल्गुनीद्वितय रोहिण्यनुराधा पुनर्वसुः।
द्वे आषाढे विशाखा च भानि द्विचरणानि च।
एतानि किञ्चिद्‌दुष्टानि वर्जयेत्सति सम्भवे ॥ ३११ ॥

इति कृतितत्त्वे 'मध्यप्रकरणम्।

---

# अथ यात्राप्रकरणम्

रत्नावल्याम्—

यात्रा वैशाखमासे भवति यदि तदा कोशहृत्यश्वलाभो
ज्येष्ठाषाढे कथञ्चिद्भवति यदि गमो मध्यमा कार्यसिद्धिः।
सूर्ये कर्केऽथ सिंहे युवतिगृहगते चाथलाभः प्रदिष्टः
कल्याण देरालब्धिः सितभवनगते गगशोको च मार्गे ॥ १ ॥

यात्रा च सिंहतुरगोपगते वरिष्ठा
मध्या शनैश्चरबुधोशनसां गृहेषु।
मानो कुलीरझषवृश्चिकगेऽतिदीर्घा
शस्तस्तु देवलमतेऽध्वनि पृष्ठतोऽर्कः ॥ २ ॥

बादरायणमते तु—

सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे।
यात्रोद्वाहगृहारम्भक्षौरकार्य्याणि वर्जयेत् ॥ ३ ॥

प्रशस्तनक्षत्राणि—

अश्विनीमृगशीर्षा च ज्येष्ठा मूलं पुनर्वसुः।
पुष्यश्रवणहस्ताश्च रेवतीमैत्रमुत्तमम् ॥ ४ ॥
मघानलयमेन्द्राग्नी सार्पार्द्रा चोत्तरात्रयम्।
एतानि भानि विद्वांस्तु यात्राकर्मणि सन्त्यजेत् ॥ ५ ॥
पूर्वात्रयं धनिष्ठा च चित्रा स्वाती प्रजापतिः।
शतभिषागमा उक्तास्तारका मध्यमागमः ॥ ६ ॥
यात्राया प्रतिपन्द्वेष्टा द्वितीया कार्यकारिणी।
आरोग्यदा तृतीया च चतुर्थी धननाशकृत् ॥ ७ ॥
श्रीदा पञ्चमी नित्यं षष्ठी कार्यविनाशिनी।
सप्तमी स्थानमानादि अष्टमी व्याधिदायिनी ॥ ८ ॥
नवम्यां मरणञ्चैव दशम्या सम्पदास्पदम्।
एकादश्यां हिरण्याप्तिः द्वादश्या प्राणसंशयः ॥ ९ ॥
सर्वसिद्धिस्त्रयोदश्या मुनिभिः कथिता पुनः।
कृष्णा वा यदि वा शुक्ला सर्वसिद्धा त्रयोदशी ॥ १० ॥
चतुर्दशी कलहदा व्याधिमृत्युप्रदायिनी।
अमायां वा न गन्तव्यं यदि कार्यशतान्यपि ॥ ११ ॥

पूर्णिमायान्तु गन्तव्य व्यासस्य वचनं यथा ।
चतुर्थ्यां वर्जयेत् पूर्वामाग्नेयीमष्टमीतिथौ ॥ १२ ॥
दशम्यां दक्षिणा चैव नैर्ऋत्यान्चैव पूर्णिमा ।
तृतीया पश्चिमे चैव वायव्या सप्तमीतिथौ ॥ १३ ॥
उत्तरस्याञ्च दशमी ऐशान्याञ्च चतुर्दशी ।
एभिर्यात्रा न कर्तव्या मुनिभिः कथिता पुरा ॥ १४ ॥
पूर्वे श्रवणज्येष्ठाया भाद्रे चाश्विनि दक्षिणे ।
पश्चिमे पूर्वफल्गुन्यामुत्तरे हस्तरोहिणी ॥
दिशाशूलानि चैतानि वर्जनीयानियत्नतः ॥ १५ ॥

महेश्वर —

मित्रर्क्षश्रवणाश्विपुष्यवसुभादित्यान्त्यहस्तेन्दवै
र्यात्रा स्याच्छुभदानिलानलमघाचित्राविशाखान्तके ।
आर्द्राया जयदेश्च मैत्रशुभदा नैर्ऋ्ती श्रवेन्द्रे तथा
याम्या भाद्रद्वयाश्विनी परदिशः मायेऽर्कभ्रोत्तरा ॥ १६ ॥
प्रान्याभेन्दुदिवाकरात्मजदिने याम्यान्न गच्छेद् गुरौ ।
मार्तण्डास्फुजितोन्न वारुणदिश नैवोत्तराहे कुजे ॥ १७ ॥

श्रीपतिः—

नैन्द्रीमैन्द्रया यमदिशमियाश्चाजपादे प्रतीचीं
नारोहिण्या धनपतिदिशं फल्गुनीमुत्तरासु ।
शूलानीति स्फुटमभिहितान्येषु ये यान्ति तेषा
प्रत्यावृत्तिर्नहि हि कुसुमोद्बोधकालो यदि स्यात् ॥ १८ ॥
शुक्रादित्यदिने न वारुणदिश न ह्ये कुजे चोत्तराम् ।
मन्देन्द्वोश्च दिने न शक्रककुभ याम्या गुरौ न व्रजेत् ॥ १९ ॥
शूलानीति विलङ्घ्य यान्ति मनुजा ये वित्तसौख्याशया ।
भ्रष्टाशा पुनरापतन्ति यदि ते शक्रेण तुल्या अपि ॥ २० ॥

ज्योतिषरत्ने—

न चाग्नेय्या गुरौ चन्द्रे नैर्ऋत्या शुक्रसूर्ययो ।
भौमे न गच्छेद्वायव्यामीशान्या बुधमन्दयो ॥ २१ ॥

मुहूर्तचिन्तामणौ—

न पूर्वदिशि शक्रभे न विधुसौरिवारे तथा ।
न चाजपदभे गुरौ यमदिशा न दैत्येज्ययो ॥ २२ ॥

न पाशिदिशि धातृभे कुजबुधेऽर्य्यमर्क्षे तथा ।
न सौम्यककुभि व्रजेत्स्वजयजीवितार्थी बुधः ॥२३॥

नारदचोपाध्याय —

प्राच्याद्या शनिचन्द्रगोष्पतिबुधादित्येषु शुक्रे कुजे
नो गम्या क्रमशस्तथा परिहरेत्प्राचीञ्च मूलेन्द्रयो ।
याम्याञ्च श्रवणादिषट्कविधिभे पुष्ये प्रतीचोन्त्यजेत्
सौम्याञ्चोत्तरफाल्गुनोऽपि तथा हस्ते न यायाद्बुधः ॥ २४ ॥
यातुर्नामर्क्षतो गण्या दिनभावाधिक बुध ।
त्रिरावृत्त्या क्रमेणैव सप्तविंशतिभानि वै ॥ २५ ॥
जन्मसम्पद्विपत्क्षेमप्रत्यरि साधको वधः ।
मैत्रातिमैत्रे तारा स्युर्नामतुल्यफलप्रदाः ॥ २६ ॥
विपज्जन्मवधाश्चैव त्रिष्वावृत्तिषु सत्यजेत् ।
प्रत्यरिं त्रितयावृत्तौ न त्वेकद्वितये त्यजेत् ॥ २७ ॥
धनदा सुखदा चैव मृत्युदा चैव प्रत्यरि ।
यात्राया सर्वथैव हि विचार्य्य गणकोत्तमैः ॥ २८ ॥
प्रत्यरौ लवण दद्याच्छाक दद्यात्त्रिजन्मसु ।
मृत्यौ स्वर्णतिलान्दद्याद् गुड दद्याद्विपद्यपि ॥ २९ ॥
आवश्यके त्विद दद्य द् ब्राह्मणेभ्यो विचक्षण ।
यात्रां कुर्य्यात्ततो धीमान्न त कालमपेक्षते ॥ ३० ॥
ज्ञातुर्नामगृहाच्चन्द्रराश्यावधिमनुक्रमात् ।
गणयेच्चन्द्रमा शेषस्ततो ब्रूयात्क्रमात्फलम् ॥ ३१ ॥
आद्ये चन्द्रे श्रियं दद्याद् द्वितीये मानसेप्सितम् ।
तृतीये धनसम्पत्तिं चतुर्थे कलहागमः ॥ ३२ ॥
पञ्चमे ज्ञानवृद्धिं च षष्ठे सम्पत्तिमुत्तमाम् ।
सप्तमे राजसन्मान मरण चाष्टमे तथा ॥ ३३ ॥
नवमे धर्मलाभञ्च दशमे मानसेप्सितम् ।
एकादशे सर्वलाभ द्वादशे हानिमेव च ॥ ३४ ॥
मेषे धनुषि सिंहे च पूर्वस्या चन्द्र आगत ।
वृषे नक्रे च कन्याया दक्षिणस्या सुधाकरः ॥ ३५ ॥
तुलाया मिथुने कुम्भे पश्चिमाया कलानिधिः ।
कर्के मीनेऽलिराशौ च पीयूषकिरणोत्तरे ॥ ३६ ॥
अलौ मेषसिंहे रणो युद्धकारी
वृषे कर्कटे मौलिके क्षेत्रसिद्धि ।

धनुर्मीनद्वन्द्वे शशी पीतलाभो
युवत्यां मृगे कुंभगे श्यामहानिः ॥ ३७ ॥
जन्मेन्दुनन्दार्कमघा च मेषे
वृषे शनिः पञ्चमहस्तपूर्णा ।
स्वाती च युग्मे नवचन्द्रभद्रा
कर्केऽनुराधा बुधयुग्मभद्रा ॥ ३८ ॥
सिंहे जया षष्ठशनिश्च मूलं
पूर्णाशनिर्दिक् श्रवणस्त्रियाश्च ।
गुरौ त्रिरिक्ता शर्वभिक् तुलाया
नन्दालिके रेवति सप्तशुक्रः ॥ ३९ ॥
चापे चतुः शुक्रजयाभरण्यो-
र्नक्रेऽष्टरिक्ता कुजरोहिणी च ।
कुम्भे जया जीवदशैकरुद्रो
झषे च चान्त्योरगशुक्रपूर्णा ॥ ४० ॥

महीनागशैलाङ्कवेदाग्नितर्का.
कराशाशिवाः पाण्डवा चित्रभानुः ।
विवाहे गमे सर्वयज्ञप्रवेशे
सदा चिन्तयेत्कामिनी घातचन्द्रम् ॥ ४१ ॥
सम्मुखे चार्थदश्चन्द्रो दक्षिणे क्षेमकारकः ।
वामे च विनिहन्त्याशां पृष्ठे वित्तक्षयावहः ॥ ४२ ॥

अथ प्रवरयोगः—

प्रतिपद्युत्तराषाढा नवम्या कृत्तिका तथा ।
पूर्वभाद्रपदाष्टम्या मेकादेश्यान्तु रोहिणी ॥ ४३ ॥
द्वादश्यामथ चाश्लेषा त्रयोदश्यां च दैवसा ।
अमीभिर्यदि गच्छन्ति भवन्तीन्द्रसमा नराः ॥ ४४ ॥

अथ रवियोगमाह, वसिष्ठ —

सूर्याच्चतुर्थे दशमे च षष्ठे विश्वर्क्षके विंशतिके नवर्क्षे ।
भवन्ति षड्भानुमदक्षयोगा. कुयोगविध्वंसकराः शुभेषु ॥ ४५ ॥

अथ सिद्धियोगाः, भीमपराक्रमे—

मूलं रवौ पुष्यकरोत्तराणि वेधा मृगाङ्कः श्रवणश्च सोमे ।
कृशानुपुर्योत्तरमानि भौमे बुधेऽनुराधा वरुणः कृशानुः ॥ ४६ ॥

बृहस्पतौ पुष्यपुनर्वसू च भगोऽश्विनी च श्रवणञ्च शुक्रे ।
शनैश्चरे स्वातिपितामहौ च योगाः किलैते शुभदायिनः स्युः ॥ ४७ ॥

हस्तर्क्षमर्कवारेन्दाविन्दुभं प्रथमं कुजे ।
सौम्ये मित्रममाचार्ये पुष्य पौष्णं भृगौ सुते ॥ ४८ ॥

इति नारदोक्तिः ।

तथा च—

रवावर्कमूलेज्यदास्रोत्तराणि
श्रुतिब्राह्ममैत्रेज्यचान्द्राणि चन्द्रे ।
अहिर्बुध्न्यदास्राग्निसार्पाश्च भौमे
बुधे ब्राह्ममैत्रार्कचान्द्राग्निभानि ॥ ४९ ॥
गुरावन्त्यमैत्राश्विदैत्येज्यधिष्ण्य
भृगावन्त्यमैत्राश्वदितिश्रवोभम् ।
मरुद्ब्रह्मगोपालसंज्ञानि सौरे
सदा सर्वसिद्ध्यै निरुक्तानि भानि ॥ ५० ॥

अथ तिथिवारोत्थसिद्धियोगमाह, वशिष्ठः—

शुक्रज्ञकुजमन्देज्या वारा नन्दादिषु क्रमात् ।
सिद्धा तिथिः सिद्धिदा स्यात्सर्वकार्येषु सर्वदा ॥ ५१ ॥
सिद्धा तिथिर्हन्ति समस्तदोषान्
मासादिशून्यानपि मासदग्धान् ।
दिनप्रदग्धानपि चान्यदोषा-
नेकादशी यद्वदनेकपापान् ॥ ५२ ॥

अथ नन्दादियोगाः—

आनन्दकालधूम्रौ च धाता सौम्यः क्रमेण च ।
ध्वांक्षो ध्वजश्च श्रीवत्सो वज्रमुद्गरछत्रकाः ॥ ५३ ॥
मित्रमानसपद्माख्य-लुम्बोत्पाताख्य मृत्युदाः ।
काणः सिद्धि शुभो मृत्युर्मुशलं गद एव च ॥ ५४ ॥
मातङ्गरक्ष संज्ञश्च चरसुस्थिरसंज्ञकः ।
प्रवर्धमान एते वै स्वनाम्ना फलदायकाः ॥ ५५ ॥

अथ गणनाक्रमो नारदेनोक्तः—

रविवारक्रमादेते दस्रभादिन्दुभाद्विधौ ।
सर्पाद्भौमे बुधे हस्तान्मैत्रमाद्देवमन्त्रिणि ॥ ५६ ॥

वैश्वदेवाद् भृगुसुते वारुणाद्भास्करात्मजे ॥ ५७ ॥

तत्रावश्यके त्याज्यघटिका ज्योति.सारसागरे—

ध्वांक्षेन्द्रायुधमुद्‌गरेषु घटिकास्त्याज्यास्तु पञ्चादितः
पद्मे लुम्बगदे चतस्र उदिता धूम्रे सदैका पुनः ।
द्वे काणे मुसले द्वयेपि च गदे सप्तैव तिस्रश्चरे
मृत्यूत्पातकरक्षसां दिनगतास्ताः कालदण्डे तथा ॥ ५८ ॥

अत्र दिनशब्देनाहोरात्रमुच्यते ।

नारदः—

विशाखादिचतुर्वर्गमर्कवारादिषु क्रमात् ।
उत्पातमृत्युकाणाख्या योगाश्चामृतसंयुताः ॥ ५९ ॥

अमृतसिद्धि —

दिङ्नाथा रविशुक्रभौमतमसो मन्देन्दुसौम्या गुरु-
र्दिङ्नाथेन ललाटगे प्रविशस कुर्य्याद् व्रजेत्कण्टके ।
तिर्य्यंशे भुजि सोर्थमीनघटगे चन्द्रे न याम्यं व्रजे-
च्छुक्रे चन्द्रसुतेऽथवा न गमनं कार्य्यं परः संस्थिते ॥ ६० ॥
नो तेषां प्रतिशुक्रयानमशुभं चे वत्समृग्वङ्गिरा
भारद्वाजवशिष्ठकाश्यपकुलोत्पन्नास्तथात्रेः कुले ।
दुर्भिक्षे विषये नवे प्रतिसितं न स्याद्विवाहेऽथवा
तीर्थानां गमने तथैकनगरे ग्राम्ये च गेहेऽथवा ॥ ६१ ॥

अथ ललाटिकलक्षणमाह राजमार्तण्ड.—

लग्नेऽर्के व्ययलाभगे रविसुते कर्म्मस्थिते भूमिजे
राहौ धर्म्मविनाशयोरविसुते द्यूनेऽरिसूनौ बुधे ।
बन्धौ ज्ञ सहजार्थयो. सुरगुरावेव ललाटोद्भवे
योगे नाशमुपैति मानवपतिः पूर्वादिकाष्ठाङ्कताः ॥ ६२ ॥

योगिनीलक्षणम्—

शतमखेन्दुहुताशनरक्षसां यमजलेशसमीरणशूलनाम् ।
दिशि दिशि क्रमतः परिवर्त्तते तिथिषु च प्रथमादिषु योगिनी ॥६३॥

तथा च—

प्रतिपन्नवमी पूर्वे रामा रुद्राश्च पावके ।
शरत्रयोदशी याम्ये वेदा मासाश्च नैर्ऋतौ ॥ ६४ ॥
षष्ठी चतुर्दशी पश्चाद्वायव्यां मुनिपूर्णिमा ।
द्वितीया दशमीपक्षे ऐशान्याञ्चाष्टमीकुजे ॥ ६५ ॥

योगिनो नवदण्डस्तु शेषो वर्ज्यो विशेषतः ।
तिथौ प्राग्घटिका-पञ्च दशोर्ध्वं वीक्षते शिवा ॥ ६६ ॥
दश वामे दश दक्षे दद्याघस्तिथिसंख्ययोः ।
यत्रास्ति भैरवी दृष्टिस्तत्र लौहं प्रवर्षति ॥ ६७ ॥
दक्षसम्मुखयोगिन्यां गमनं नैव कारयेत् ।
वामे शुभकरी देवी पृष्ठे सर्वार्थसाधिनी ॥ ६८ ॥

अथ चरयोगिनीलक्षणम्—

इन्द्रवायुयमशूलिपाशिनोवह्निवैश्रवणरक्षसां क्रमात् ।
अर्घयाममनुवासरादितो दिक्षु सम्भ्रमति योगिनी चरा ॥ ६९ ॥

अथ राहुलक्षणम्—

गुरुभान्वोर्वसेत्प्राच्यामिन्दुशुक्रे च दक्षिणे ।
कालराहुः कुजे प्रत्यग् उत्तरे बुधमन्दयोः ॥ ७० ॥

अथ रुद्रलक्षणम्—

हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवम् ।
उदयादिषु भ्रमति सदा घटिका रुद्रो महाप्रबलः ॥ ७१ ॥

अथ यात्रायां ब्रह्मयामलमते राहुचक्रम्—

पुष्पितं फलितं चैव निष्फलं हटितं गुदम् ।
राक्षसं तामसं वृद्धं मृतं जिह्वाक्रमेण च ॥ ७२ ॥
त्रीणि पुष्पितऋक्षाणि क्षेमलाभकराणि च ।
शत्रुभङ्गो भवेद्युद्धे यात्रा मासेन लाभदा ॥ ७३ ॥
ततश्चत्वारि ऋक्षाणि पक्षैकेन फलानि च ।
गजवाजिधनं देशं यात्रायां लभते ध्रुवम् ॥ ७४ ॥
अफलेषु त्रिष्वृक्षेषु षण्मासैर्यायिनम्प्रति ।
सन्धिः सेवा तथा देशं यायी संलभ्यते ध्रुवम् ॥ ७५ ॥
फलं प्राप्नोति वर्षेण फटितैश्च त्रितारकैः ।
गोधनानि परिवृन्दानि यायी लुण्ठति ध्रुवम् ॥ ७६ ॥
गुदैकया भूशं लक्ष्मीः पद्मिनी प्रियवादिनी ।
रूपयौवनसम्पन्ना मासयुग्मेन लभ्यते ॥ ७७ ॥
विनाशो महाहत्या च मुखरोगश्च लूतिका ।
ब्राह्मणादिप्रजापीडा राजसंख्यैस्त्रितारकैः ॥ ७८ ॥

विग्रहस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च ।
रोगपीडा भवेद्वर्षे राजसख्यैस्त्रितारकै ॥ ७९ ॥

हस्त्यश्वपुत्रमित्रादिदेशग्रामपरिग्रहा ।
षड्भिर्मासैर्विनश्यन्ति यायिनस्तामसत्रये ॥ ८० ॥

तामसादमतश्चतुस्तारवृद्धसङ्ख्यका ।
सर्वनाशकरा प्रोक्ता मासैनेन न संशय ॥ ८१ ॥

ततस्त्रिमृत्युऋक्षाणि राजमृत्युकराणि च ।
आसीमान्तश्च गुण्यश्च पक्षैकेन फलप्रदम् ॥ ८२ ॥
युद्धे भङ्गो महाभातिर्द्रव्यहानि कुलक्षयम् ।
सद्यो मृत्युलभेद्यायी राहुवक्त्रे सुनिश्चितम् ॥ ८३ ॥

इति दशाङ्गराहुचक्रम् ।

अथ कालविचार —

रुद्रे जलाग्निसौम्ये च राक्षसेन्द्रानिले यमे ।
ईशानपावके सौम्ये चैत्रादौ भ्रमण भवेत् ॥ ८४ ॥

वामसम्मुखगामी च कालो नैव प्रशस्यते ।
यात्राया सयुगे काल पृष्ठदक्षिणग शुभ ॥ ८५ ॥

वामे पृष्ठे रविश्चैर्यादक्षिणाग्रे निशाकरम् ।
जयतीह न सदेह एकोऽपि शतमाहवे ॥ ८६ ॥
सम्मुखे चार्थलाभाय दक्षिणे च शशी शुभ ।
वामे कार्यविनाश स्यात्पृष्ठतो मरण ध्रुवम् ॥ ८७ ॥

अथ योगफलम्—

दु ख च व्यसन चैव प्राप्नोति स व्यतीपाते ।
मृत्यु वैधृतिगमने राहुस्पर्शे तथोत्पाते ॥ ८८ ॥

अत्र भीमपराक्रमे—

न विष्कुम्भो न वा गण्डो न व्यतीपातवैधृती ।
चन्द्रताराबले प्राप्ते योगा गच्छन्त्यसम्मुखा ॥ ८९ ॥

जन्मताराष्टमे चन्द्रे सक्रान्तौ सूर्यसक्रमे ।
भद्रा गण्डे च रिक्ताया षष्ठ्या वा न व्रजेत्क्वचित् ॥ ९० ॥
द्वादश्यामपि चाष्टम्या न गच्छेत्प्रस्थितोऽपि सन् ।
जन्ममासे न गन्तव्य राज्ञा विजयमिच्छता ॥ ९१ ॥

ज्येष्ठायां न व्रजेदैन्द्रीं न प्राग्भाद्रे च दक्षिणाम् ।
नोत्तरां पूर्वफल्गुन्यां रोहिण्यां न च पश्चिमे ॥ ९२ ॥

अपरञ्च—

अश्विन्यां दक्षिणां नैव व्रजेद्धस्ते न चोत्तराम् ।
तथैन्द्रीं न व्रजेन्मूले नैव पुष्ये च पश्चिमाम् ॥ ९३ ॥
धनुर्गोमिथुनकन्यातुलालग्नेषु नैव हि ।
धनिष्ठापञ्चके नैव दक्षिणां न व्रजेदपि ॥ ९४ ॥

ज्योतिःसागरे—

लग्ने कार्मुकमेषतौलिगमने कार्ये विलम्बो नृणां
पञ्चत्वं मकरे तथा शनिगृहे तद्वत्फलं वृश्चिके ।
कुम्भे वा वृषकेसरीपदि गते सर्वार्थसिद्धिस्तदाऽ-
भीष्टं सर्वमनोरथञ्च लभते कन्याझषे मन्मथे ॥ ९५ ॥
हरिर्मेषो वृषश्चान्धो न पश्यति दिनेऽपि च ।
मीनकर्कटयोः कन्या निशान्धः परिकीर्तितः ॥ ९६ ॥
युग्मे कुम्भे निशापंगुर्दिवापंगुश्च वृश्चिके ।
मकरतुलधनुर्दिवाबधिरः परिकीर्तितः ॥ ९७ ॥
अन्धे यात्रा स्मृता लब्ध्यै बधिरेऽपि तथैव च ।
पंगुके गमनं नैव विवाहाद्य न कारयेत् ॥ ९८ ॥
सम्मानदानवसुवाजिगजावलीनां
लाभं लभन्ते विजयोदितताश्च ।
सर्वार्थसिद्धिविभवं लभते नरेन्द्रो
यो वाक्पतीन्दुसुतशुक्रदिने प्रयातः ॥ ९९ ॥
तिथिवारञ्च नक्षत्रमेकीकृत्य निधापयेत् ।
सप्तभिश्च हरेद्भागं शेषे यात्रां विनिर्दिशेत् ॥ १०० ॥
प्रथमे शोभना यात्रा द्वितीये लाभकृद्भवेत् ।
तृतीयेऽरिविनाशः स्याच्चतुर्थे सिद्धिरुत्तमा ॥ १०१ ॥
पञ्चमे मार्गविघ्नः स्यात् षष्ठे निधनमेव च ।
उक्तं गर्गेण मुनिना शून्ये श्रीः सर्वतोमुखी ॥ १०२ ॥
उग्रा दोषशतं हन्ति सहस्रं हन्ति गोरजः ।
अभिजिच्छतसहस्राणि लग्नः कोटिं व्यपोहति ॥ १०३ ॥

तत्रोपाख्यानम्—

आरक्तसंध्यां रजनीं विरामं वदन्त्युपायोग इति प्रवीणाः ।
तत्र प्रयातः सकलार्थसिद्धिः सम्पद्यते हस्ततलस्थितैव ॥ १०४ ॥

प्रभष्टद्युतितारकास्फुटतटो प्राचो भवेन्निर्मला
ईषद्रक्तविलोहितान्तधवला देवै सदा वाञ्छिता।
नो वार न तिथि न चापि करण चन्द्रञ्च नापेक्षते
हत्वा दोषसहस्रसकटदिनेप्यूषा करोत्युन्नतिम् ॥ १०५ ॥

अथ मध्याह्नम्—

मध्याह्ने व्योमसस्थे स्फुरदनलशिखाप्रज्वलद्भानुबिम्बे
छाया साध्वी प्रचलितपुरुषे यत्र तत्पादलग्ना।
तस्मिन्काले न लग्न न च तिथिकरण नैव वार न योग
सम्मानारोग्यसौख्य क्षितिधवतनय तत्र गन्ता लभेत ॥ १०६ ॥

सर्वद्वार सर्वार्थसाधक सर्वकर्मसु तथेष्ट ।
सर्वेषा वर्णानामभिजित्सज्ञो मुहूर्त स्यात् ॥ १०७ ॥
अष्टमो दिवसस्यार्धे त्वभिजित्सज्ञक क्षण ।
स ग्रह्य तु बुधे नित्य सर्वकामफलप्रद ॥ १०८ ॥
चक्रमादाय वैकुण्ठ सर्वदोष निकृन्तति ।
अभिजिन्न बुधे शस्तो याम्यानुसरणे तथा ॥ १०९ ॥
अन्यदिग्गमनेऽवश्य सर्वसिद्धिकर सदा।
समहाय च द्रेष्काणे रत्नभाण्डान्विते तथा ॥ ११० ॥
फलपुष्पे युते यायाच्छुभग्रहविलोकिते ।
रत्नभाण्डान्वितौ ज्ञेयौ धनुर्मध्यगतादिमौ।
द्रेष्काण कर्कटाद्यस्तु फलपुष्पान्वित स्मृत ॥ १११ ॥
धिष्ण्यादिषु निषिद्धेषु चन्द्रताराविलोमत ।
ऊषा गोधूलिका योग स्वीकृत्य गमनञ्चरेत् ॥ ११२ ॥
प्राच्यामूषाम्प्रतीच्यान्तु गोधूलिं वर्जयेद् बुध ।
दक्षिणस्या त्वभिजितमन्यत्र शुभदायक ॥ ११३ ॥

तथा च मुहूर्तचिन्तामणौ—

ऊषाकाले विना पूर्वा गाधूलिं पश्चिमा विना।
विनोत्तरा निशीथ सद्याने याम्या विनाऽभिजित् ॥ ११४ ॥

अथ सर्वाङ्गी ज्योतिषसमहे—

तिथि वार च नक्षत्र क्रमाद् द्वित्रिचतुर्गुणम्।
सप्ताष्टऋतुभिर्भक्त शेषाङ्क मतमुत्तमम् ॥ ११५ ॥
आदिशून्ये महाव्याधिर्मध्यशून्ये महद्भयम्।
अन्त्यशून्ये महाहानिस्त्रिकशून्य न जीवति ॥ ११६ ॥

नृसिंहः—

सूर्यनक्षत्रमारभ्य चन्द्रर्क्षांश्च प्रगण्यते ।
सप्तभिस्तु हरेद्भागं शेषेण फलमूह्यते ॥ ११७ ॥
द्वये षष्ठे च भ्रमणं त्रये सप्ते च ताडनम् ।
प्रथमं पञ्च चत्वारि अर्द्धनी नास्ति निश्चयः ॥ ११८ ॥
दिनवार तिथियुत स्वनक्षत्रविभूषितम् ।
भाजितं तुरगैणैव शेषात्तु फलमादिशेत् ॥ ११९ ॥
प्रथमे शोभना यात्रा द्वितीये सिद्धिरुत्तमा ।
तृतीये त्वर्थहानिः स्याच्चतुर्थे सिद्धिरुत्तमा ॥ १२० ॥
पञ्चमे मार्गविघ्नः स्यात् षष्ठे तु मरणं ध्रुवम् ।
सप्तमे सर्वतो लक्ष्मीः श्रीचण्डेश्वरभाषितम् ॥ १२१ ॥
मूर्तिः कोशो धन्विनो वाहनानि
मन्त्रः शत्रुर्मार्ग आयुर्मनश्च ।
व्यापारश्च प्राप्तिरेवं व्ययश्च
लग्नाद्भावा द्वादशैते विचिन्त्याः ॥ १२२ ॥

ज्योतिस्सारसागरे प्रस्थानभावफलम्—

लग्ने ध्रुवं बुधबृहस्पतिभार्गवाश्चेत्
प्रस्थितागमनलाभमवाप्नुवन्ति ।
अङ्गारके रविशनैश्चररात्रिनाथे
राहौ फलन्ति भयशोकवियोगदुःखम् ॥ १२३ ॥
कोपस्थाने नृपाणां भसुरगुरुबुधौ धर्मकार्यार्थसिद्धिं
वस्त्रोत्पत्तिश्च जीवो हृदि सुखमतुलं शत्रुपक्षक्षयश्च ।
मन्दो मार्गश्रिनिसुनसहितः कोपहानिश्च भानु-
श्चन्द्रः कुर्यान्नरेन्द्रं प्रियजनसहितं राहुरुन्मादकारी ॥ १२४ ॥
प्रस्थाने भूमिलाभं क्षितिसुतरविजौ भानुना संप्रयुक्तः
शुक्रश्चन्द्रात्मजो वा सुरगुरुरथवा शीतरश्मिर्यदा वा ।
भ्रातृस्थाने स्थितास्ते नृपवरगमने सर्वकार्यार्थसिद्धिं
राहुः शत्रोर्विनाशं रचयति नियतं पार्थिवे प्रस्थिते स्यात् ॥ १२५ ॥
बन्धुस्थानगतो ददाति विपुलं भोगं भृगोरात्मजः
शत्रूणां क्षयमीहते सुरगुरुः सौख्यं तथा चन्द्रजः ।
हानिं कोपमतं करोति रविजः सिन्धुक्षयं चन्द्रमा
राहुर्भूमिसुतस्तथार्कसहिताः कुर्वन्ति दुःखं महत् ॥ १२६ ॥

जीव पुत्रार्थलाभ जनयति भृगुज सर्वकार्यस्य सिद्धि
सग्रीव चाप्युपेत कुमुदवनसुहृद्रायुरारोग्यकर्ता ।
सूर्यं सौम्यो महीजो दिनकरतनय सैंहिकेय प्रयुक्त
सर्वे ते पञ्चमस्था सततभयकरा पार्थिवाना भवन्ति ॥ १२७ ॥

षष्ठस्थाने नृपाणां दिनकरतनयो भूमिजो भास्करश्च
शीतांशुर्दैत्यमन्त्री रजनिकरसुत सैंहिकेयोऽपि जीव ।
सर्वे ते चार्थलाभ हृदि गतसकल कुर्वते सर्वकार्यं
यात्रैषा पार्थिवाना भवति शुभकरी धर्मकार्यार्थदा च ॥ १२८ ॥

नेष्टौ शुक्रदिवाकरौ च रविजो राहुस्तथा भूमिज
क्षिप्र तत्र भयं नयन्ति नियत स्थाने स्थिते सप्तमे ।
सौम्यो मित्रसमागम सुरगुरु कार्यार्थसिद्धि नृणा
चन्द्र श्रेष्ठफल ददाति नियत यात्रासु नात्र श्रम ॥ १२९ ॥

आरोग्य सोमपुत्रो दिशति भृगुसुत सर्वकार्यस्य सिद्धि
जीवो रक्षत्यवश्य सुतमिव जननी पार्थिवन्नैधनस्थ ।
चन्द्रार्कौ चेत्तमो वा जनयति नियत शत्रुपक्षस्य वृद्धि
सन्ताप भूमिपुत्रो दिनकरतनयस्तस्करेभ्यो भय च ॥ १३० ॥

शुक्रो हि सौख्य नवमो बुधश्च जीवोप्यसौ बोधयते प्रभुत्वम् ।
चन्द्रार्कसौरा सहभूमिजेन रोगश्च देहे जनयन्ति नित्यम् ॥ १३१ ॥

कर्मस्थानस्थितोर्क प्रचुरधनकर पुष्टिद शीतरश्मि
र्जीव सग्रामकाले भवति जयकर शुक्रसौम्यौ प्रशस्तौ
क्षिप्र यात्रोद्यताना भवति जयकर सर्वकार्येषु भौमो
राहु शत्रोर्विनाश वितरति नियत दीर्घरोगस्तथार्कि ॥ १३२ ॥

शशिबुधगुरुशुक्रा सूर्यराह्वार्किभौमा
व्रजति यदि नरेन्द्र क्षिप्रमेकादशस्था ।
द्रुतमिह रिपुवर्गं घ्नन्ति नून प्रयातु
विचरति गजरायो युद्धभूमिस्थितो वा ॥ १३३ ॥

क्षितिजरविसुतार्का सैंहिकेयो नराणा
जनयति रजनीश श्रेष्ठभृत्येषु भेदम् ॥
रिपुजयधननाश भृत्यनाश च कुर्यु
र्यदि शशिगुरुशुक्रा द्वादशस्था भवन्ति ॥ १३४ ॥

एक शुक्रो गमनसमये लग्नसस्थो यदि स्यात्
क्षोणीपुत्रे रिपुसहजगे लाभगे चार्कपुत्रे ।

स प्राप्नोति प्रचुरविभवं देवकीर्तिञ्च यान
शत्रोः सैन्यं जयति निखिलं गाङ्गमम्भो यथाघम् ॥ १३५ ॥

अथ धरित्रीलाभयोगमाह नारद —

लाभशत्रुसहजेषु यमारौ सौम्यशुक्रगुरवो नवयुक्ताः ।
गच्छतो यदि तदा धरित्रीं स्यु सागराम्बुरशनावशमेति ॥ १३६ ॥
शशिनि चतुर्थगृहं समुपेते बुधसहिते धुलगे भृगुपुत्रे ।
चलति यदा नरपालनकर्ता बहुविधशत्रुगणञ्च विनिघ्नम् ॥ १३७ ॥

करोतीति शेषः । तथा च बादरायणः —

राहुक्ष्माजदिवाकरेन्दुरविजे सम्प्रस्थिते लग्नगे
क्षुत्तृष्णाग्निविनाशनञ्च लभते रोगांश्च नानाविधान् ।
जीवः सोमसुतस्तथैव भृगुजो यत्रोदयस्थो नृणां
सा यात्रा धनधान्यवैभवकरी पुण्यैः कृतैर्लभ्यते ॥ १३८ ॥

सौम्यैर्दृष्टियुतं लग्नं निषिद्धमपि शस्यते ।
पापग्रहसमायोगे विहितं निहतं भवेत् ॥ १३९ ॥
केन्द्राष्टमगतान्पापाँस्त्यजेल्लग्नञ्च नैधनम् ।
निधनस्थितचन्द्रश्च यात्राया मृत्युकारकम् ॥ १४० ॥
केन्द्रत्रिकोणगाः सौम्याः पापाश्च त्रिषडायगाः ।
भवन्ति यत्र तदिदं लग्नं कर्माणि शोभनम् ॥ १४१ ॥
पापैरदृष्टमयुतं सौम्यैर्दृष्टं युतं यदि ।
स्वामिना च युतं दृष्टं लग्नं कर्माणि शोभनम् ॥ १४२ ॥
शुक्रः पञ्चसहस्राणि बुधः पञ्चशतानि च ।
लक्षमेकन्तु दोषाणां गुरुर्लग्ने व्यपोहति ॥ १४३ ॥
पापलग्नं पापयुक्तं पापग्रहविलोकितम् ।
क्षीणनीचगृहोपेतं चन्द्रं सर्वत्र वर्जयेत् ॥ १४४ ॥

तुङ्गत्रिकोणभवने भवने निजे वा
सौम्याश्च सौम्यगृहगस्तदवीक्षिते वा
जामित्रयोघविहितानपहृत्य दोषान्
दोषाकरः सुखमनेकविधिं विधत्ते ॥ १४५ ॥
एकेन वा बुधबृहस्पतिभार्गवाना
योगो भवेन्नवमपञ्चमकण्टके वा
द्वाभ्यां वदन्ति मुनयोऽप्यधियोग एव
योगाधियोगमपरे त्रिभिरामनन्ति ॥ १४६ ॥

योगेषु क्षेम न वदन्ति तथाऽधियोगे
क्षेम रिपोश्च मरण बहुविभ्रमञ्च।
क्षेम यशो नरपतेश्च सुख जयञ्च
योगाधियोगगमने विजयेद्धरित्रीम् ॥ १४७ ॥

महीभृता योगवशात्फलादयो
द्विजन्मनामृक्षगुणैश्च जायते।
सतस्करादेः शाकुनप्रभावतो
जनस्य शेषस्य मुहूर्तशक्तित ॥ १४८ ॥

श्रीपति —

जननसमयलग्नान्नैधने जन्मभाद्वा
निजरिपुभवनाद्वा शत्रुभे लग्नयाते।
पतिभिरुत तदीयैर्लग्नगै पार्थिवानां
गमनमथ विष वा भक्षित तुल्यमेव ॥ १४९ ॥

येषु जन्मनि शुभग्रहा स्थिता पञ्च राशिरिह वेशिसज्ञक ।
यश्च शत्रुभवनाच्च नैधनेऽलाभग स गमने जयावह ॥ १५० ॥

मस्तकोदयगृहेषु चम्वदिग्द्वारभेषु च यियासताञ्जय ।
मूर्तिवर्तिषु हि सङ्गराङ्गणे भङ्गमेवमपरेषु राशिषु ॥ १५१ ॥

वक्र पन्था मीनलग्नांशके वा
कार्या सिद्धि स्यान्निवृत्तिश्च दूरात्।
नेष्ट कुम्भोप्युद्गमस्थितो वा
लग्ने चापांशके नौयानसिद्धि ॥ १५२ ॥

राम —

कुम्भकुम्भांशकौ त्याज्यौ सर्वथा यत्नतो बुधै ।
तत्र प्रयातुर्नृपतेरर्थनाश पदे पदे ॥ १५३ ॥

*अथ वसुचयलाभयोग —*

अशुभखगैरनवाष्टमदर्थैर्हिबुकसहोदरलाभगृहस्थ ।
कविरिह केन्द्रगगोष्पतिदृष्टो वसुचयलाभकर खलु योग ॥ १५४ ॥

सहजे रविर्दशमभे शशी तथा
शनिमङ्गलौ रिपुगृहे सिंहीसुते
हिबुके बुधो गुरुरपीह लग्नग
स जयत्यरीन्प्रचलितोऽचिरान्नृपः ॥ १५५ ॥

शून्ये चन्द्रे समुदयगेऽर्के जीवे शुक्रे विदि घनसंस्थे ।
ईदृग्योगे चलति नरेशो जेता शत्रून्गरुड इवाहीन् ॥ १५६ ॥

श्रीपतिः—

त्र्यायारिषु यमारौ चेच्छक्तिभाजः शुभग्रहाः ।
प्रयाणे नृपतेर्यस्य करस्था तस्य मेदिनी ॥ १५७ ॥
नेष्टश्चतुष्टये वक्रो तद्वर्गोऽपि विलग्नगः ।
करोति बहुधा नाशं तद्द्वारेऽपि यियासताम् ॥ १५८ ॥

महेश्वरः—

यात्रायां शुभदाः शुभा अखिलगाः शुक्रो घुनस्थो शुभ-
श्चन्द्रो लग्नमृतिस्थितोऽशुभकरस्त्र्यायारिकर्मोपगाः ।
पापाः स्युः शुभदाः स्वरांशुतनयःकर्मस्थितो नोऽशुभो
नत्वाग्निं द्विजदेवतां क्षितिपतिर्ध्यायन्दिगीशं व्रजेत्॥ १५९ ॥

दीपिकायाम्—

व्रजेद्दिगीशं हृदये निवेश्य ययेन्द्रमैन्द्र्यामपराञ्च तद्वत् ।
सुशुक्लमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ ॥ १६० ॥
कल्याणनामसचिवाप्तजनायुधीय-
दैवज्ञविप्रजनकचुकिमध्यसंस्थः ।
द्वात्रिंशत समुपगम्य पदानि भूमौ
प्रागादि नागरथवाजिनरैस्तु यायात् ॥ १६१ ॥

अथ यात्रासमये पठनीयानि—

वैन्यं पृथुं हैहयमर्जुनञ्च शाकुन्तलेयं भरतं नलञ्च ।
एतान्नृपान्यः स्मरति प्रयाणे तस्यार्थसिद्धिः पुनरागमश्च॥१६२॥
यः स्मरेत्तुलसीं सीतां रामं सौमित्रिणा सह ।
स विजित्य रिपून् सर्वान् पुनरायाति कार्यकृत् ॥ १६३ ॥
माधवो माधवो वाचि माधवो माधवो हृदि ।
स्मरन्ति साधवः सर्वे सर्वकार्येषु माधवम् ॥ १६४ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १६५ ॥

अथ शकुनानि ज्योतिःसारे—

चाषः शुभाः सारसचापबर्हिः कादम्बहंसाश्च सजीवजीवाः ।
काकाश्च पङ्क्त्या तुरगादपृष्ठगाः श्रीवृक्षवाल्व्यजनानि चन्दनम् ॥१६६॥

दधिमधुघृतरोचनाकुमार्यो ध्वजकलशाम्बुजभद्रपीठशङ्खा ।
सितवृषकुसुमाम्बराणि छत्र द्विजगणिकाप्रजना सुचारुवेषा ॥ १६७ ॥

अन्यच्च—

गोकन्या शङ्खभेरीदधिफलकुसुम पावको दीप्यमान
श्छत्र यानप्रयुक्त नृपविरथयुत पूर्णकुम्भो द्विजाश्च ।
उत्क्षिप्ता चैव पृथ्वी जलचरयुगल सिद्धमन्न शवायु
र्वेश्यास्त्रीमांसभारो हितमपि वचन प्रस्थिताना प्रशस्तम् ॥१६८॥
वेदाङ्गवेदध्वनिशङ्खभेरीमृदंगपुण्यञ्च पुराणशब्दा ।
धर्मार्थशास्त्राणि च भारतञ्च रामायण मङ्गलकीर्तनानि ॥१६९॥
जाहिकाहि शश शूकर गोधी कीर्तन शुभमुदाहृतमार्यै ।
नो रुत न च विलोकितमेषामन्यथा गदितमृक्षकपीनाम् ॥ १७० ॥

अथ निषिद्धशकुनानि—

सरत तैलाभिषिक्त भुजगमभिमुख मुक्तकेशञ्च नग्न
प्रव्रज्य छिन्ननास जटमुकुटधर रक्तपुष्पार्द्रवास ।
उन्मत्त शून्यकुम्भ त्वभिमुखकलह वानर काष्ठभार
प्रस्थाने प्रस्थिताना यदि न हि मरण नैव सिद्धिर्नराणाम् ॥१७१॥
कार्पासौषधिकृष्णधान्यलवण बल्लोमास्थितैल वसा
चर्माङ्गारगुडाश्च रक्तकुसुम निर्नासिका व्याधिता ।
वान्तो भक्तजटेन्धन तृणतुषक्षुत्क्षामसर्पा सक्र
न्मुण्डो नग्नविमुक्तकेशपतिता काषायिनश्चाशुभा ॥१७२॥
आर्द्रवासस्तथा नग्नो रिक्तकुम्भो निषिध्यते ।
यदि नैतेषु मृत्यु स्यात्कार्यहानिर्ध्रुवो मत ॥१७३॥

किञ्च—

शुभाशुभानि सर्वाणि निमित्तानि स्युरेव च ।
अन्यतस्तु मन शुद्धि सा च शुद्धिर्जयावहा ॥ १७४ ॥
उप काले शुभा यात्रा देवैरपि समीहिता ।
यत्र न प्रभवन्त्येते दोषा कार्यविघातका ॥ १७५ ॥

शमिह हि रचितानि यत्नतो वा शुभफलदानि भवन्ति मङ्गलानि ।
शकुनमशकुन क्रोशमात्र जगुरपरेपि च केपि पञ्चपटकम् ॥ १७६ ॥
( क्रोशादूर्ध्वं शकुनविरुत निष्फल प्राहुरेके । )

यात्राव्यवस्था—तत स्नात शुक्लाम्बरधर मङ्गलचित्तो देवद्विजगोदिगीशान्

सपूज्य ज्वलन्तमग्नि प्रदक्षिणीकृत्य उपविष्ट प्रथम गन्तव्यदिशमभिमुख दक्षिणं पाद विसर्जयेत्। तथा च स्वरशास्त्रे—

वामे वा दक्षिणे वापि यत्र सञ्चरते शिव ।
कृत्वा तत्पदमादौ तु यात्रा भवति सिद्धिदा ॥ १७७ ॥

चन्द्रे सव्यपदः कार्यो रवौ तु दक्षिणः पदः ।
पूर्वपद पुर कृत्वा यात्रा भवति सिद्धिदा ॥ १७८ ॥

विपरीतोदय यात्रा मनसापि न कारयेत् ।
यात्राभङ्गो भवेत्तस्य हानिमृत्युर्भवेत्तत ॥ १७९ ॥

पुरो वामोऽर्ध्वतश्चन्द्रे दक्षेऽध पृष्ठतो रवौ ।
पूर्णरिक्तानि रेकोऽय ज्ञातव्य कोविदै सदा ॥ १८० ॥

ऊर्ध्वं वामाग्रतो दूता ज्ञेयो वामपथि स्थित ।
पृष्ठदक्षिणतोऽध स्था सूर्यनाडौ शुभा मता ॥ १८१ ॥

वामाचारप्रवाहे तु न गच्छेत् पूर्वमुत्तरम् ।
प्ररोहति भय तस्य गताशो न निवर्तते ॥ १८२ ॥

दक्षनाड्या प्रवाहे तु न गच्छेद्याम्यपश्चिमे ।
तत्र स्यान्मृत्युसद्भावो मृत्युरेव न सशय ॥ १८३ ॥

इति सर्वं शिववचन श्रुत्वा गच्छेत्—यदि कश्चित्तत्र विरोधावरयान क्रियते तदा यथासम्भव कर्तव्यम् ।

यथोक्त वराहेण—

प्राच्यां सप्तदिन प्राप्य दक्षिणस्यान्तु पञ्चकम् ।
प्रतीच्यान्तु त्रिरात्र स्यादुत्तर स्याद् दिनद्वयम् ॥
किञ्चित्कार्यं समाप्याथ बहुभिस्तु त्रिरात्रकम् ॥ १८४ ॥

अन्त पुराद्वा स्वनिवेशनाद्वा सिंहासनादग्निपरिग्रहाद्वा ।
कुर्यान्नरेन्द्र प्रथम प्रयाण विप्रै शताग्रै कृतमङ्गलश्री ॥ १८५ ॥

किन्तु—

गृहाद् गेहान्तर गग सीम्न सीमान्तर भृगु ।
शरक्षेपाद्गुरद्वानो वशिष्ठो नगराद् बहि ॥ १८६ ॥

इत्यादिकमपि चिन्त्यम् । यम —

दुग्ध त्याज्य पूर्वमेव त्रिरात्रात् क्षौर त्याज्य पञ्चरात्राच्च पूर्वम् ।
क्षौद्र तैल वासरेऽस्मिन् वमिश्च त्याज्य यत्नोद्भूमिपालेन नूनम् ॥ १८७ ॥

भुक्त्वा गच्छति यदि चेत्तैलगुडक्षीरपक्वमासानि।
विनिवर्त्तते स रुग्णः स्त्रीद्विजमवमान्य गच्छतो मरणम् ॥१८८॥

अथ युद्ध्वा प्रत्यागतस्य गृहप्रवेशविधिरुक्तो विद्यामाधवे—

गेहन्तु प्रविशन्नथ घटवधूर्न्केस्थिते भार्गवे
श्रेष्ठो दक्षिणपूर्वभागनिरतः शुक्रोऽत्र वर्ज्योऽन्यगः।
कर्तुस्तत्र शुभावहान्युपचयक्षेत्राणि लग्नानि च
त्याज्यो निर्गमवासराद्य नवमो मासस्तथा वासरः ॥ १८९ ॥

गुरुः—

निर्गमान्नवमे मासि नवमे दिवसेऽपि वा।
नवम्याञ्च प्रवेष्टव्यं प्रविष्टो नाशमृच्छति ॥ १९० ॥

इदं गन्धृत्यधिके द्रष्टव्यम्।

लल्ल —

त्वाष्ट्रे च पौष्णे शशिभे च मैत्रे स्वायम्भुवर्क्षे त्रिपु चोत्तरासु।
अक्षीणचन्द्रे गुरुवासरे च तिथावरिक्ते च गृहप्रवेशः ॥१९१॥

सर्वोपि गृहप्रवेशविधिर्वत्सरानन्तरं बोध्यम्।

बृहस्पतिः—

आगत्य वत्सरादर्वागगमनागमने शुभे।
आगव्यूतेरथार्वाग्वा गमनागमने शुभे ॥ १९२ ॥

इति कृतितत्त्वे यात्राप्रकरणं समाप्तम्।

---

# अथ राज्याभिषेकप्रकरणम्

बृहद्यवने—

जन्मेशलग्ने सदशेशसूर्ये भौ मेवलिप्ते क्षितिपाभिषेकः।
ज्येष्ठाश्रवक्षिप्रमृदुध्रुवेषु सौम्यग्रहस्याह्नि तिथावरिक्ते ॥ १ ॥
लग्ने स्थिरे चोपचये स्थिते च शीर्षोदये च क्षितिपाभिषेकः ॥२॥

ज्योति सारसागरे—

नृपाभिषेक नृपतिप्रयाण नृपस्य कार्यं नृपदर्शनं च।
तथापि कार्यं भुवि किंचिदस्ति कुर्यात्तदा भानुदिने प्रशस्तम् ॥ ३ ॥

इति वचनाद्रविदिनेपि राज्याभिषेक। तथा च नारदः—

गुरुशुक्रार्कवारेषु रोहिण्यामुत्तरात्रये।
अभिषेको नरेन्द्रस्य कर्तव्यो वै मनीषिभिः ॥ ४ ॥

श्रीपतिः—

मैत्रशाक्रकररोहिणीषु वै वैष्णवायत्रिषु त्रिपूत्तरासु च।
रेवतीमृगशिरोऽश्विनीष्वपि क्ष्माभृतां समभिषेक इष्यते ॥ ५ ॥
विलग्नजन्मेशदशाधिनाथगार्तण्डधात्रीतनयैर्बलिष्ठैः।
गुर्विन्दुशुक्रस्फुरदण्डजालैर्महीपतीनामभिषेक इष्टः ॥ ६ ॥
सुहृत्त्रिकोणस्वगृहोच्चसंस्थाः श्रियं च कीर्तिञ्च दिशन्ति खेटाः।
अस्तंगता वक्रगनीचगा या भयाय शोकाय भवन्ति राज्ञाम् ॥ ७ ॥
जन्ममादुपचये तथा स्थिरे लग्नवर्तिनि च मस्तकोदये तथा।
सद्ग्रहैश्च सहिते विलोकिते क्रूरदृष्टिसमुपस्थितिवर्जिते ॥ ८ ॥
तारकाशशभृतोर्बलेऽह्नि सद्ग्रहस्य च तिथावरिक्तके।
सद्यूनव्ययत्रिकेषु कण्टकेऽष्टमेषु रहितेषु साधुषु ॥ ९ ॥

धनान्त्यस्थैः क्रूरैर्भवति नियतं रोगभाग्नग्नसंस्थै-
श्चतुर्थेद्यनस्थैश्च्युतनिजपदः पुत्रग· सौख्यहीनः।
निरुद्योग स्वस्थैः शुभविरहितोधर्मगैः स्यान्नरेन्द्रो
निरायुर्मृत्युस्थैः सुतधनयुतात्यायशत्रुस्थितैश्च ॥ १० ॥
निधनरिपुगृहस्थे शीतगौ पापदृष्टे
यमसदनमुपैति द्राग्नृपः शत्रुतो वा।

व्ययरिपुमृतिवर्जं सत्फलं दद्युरिष्टाः
सकलभवनसंस्थास्तेषु निष्टाश्च पापाः ॥ ११ ॥
यस्याभिषेके सुरराजमन्त्री भवेद्विलग्ने यदि वा त्रिकोणे
शुक्रो सुरे शत्रुगृहे महोजं स मोदते वापि चिरायुलक्ष्मीः ॥ १२ ॥
त्रिलाभसंस्थौ शशितिग्मरश्मी मेषूरणे बन्धुगृहे गुरुश्च ।
यस्यात्र योगे क्रियतेऽभिषेकः सम्पत्स्थिरा तस्य चिरायुरेव ॥ १३ ॥

इति कृतितत्त्वे राज्याभिषेकप्रकरणम् ।

# अथ गोचरप्रकरणम्

देवज्ञमनोहरे—

सूर्यस्य—

स्थानं जन्मनि नाशयेद् दिनकरः कुर्याद् द्वितीये भयं
दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति ।
दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽर्थहा सप्तमे
पीडामष्टमगः करोति वपुषः पुण्यक्षयं धर्मगः ॥ १ ॥
कर्मसिद्धिजनकस्तु कर्मगो वित्तलाभकृदथायसंस्थितः ।
वित्तनाशजनितामहापदं यच्छति व्ययगतो दिवाकरः ॥ २ ॥

चन्द्रस्य—

जन्मन्यन्नं दिशति हिमगुर्वित्तनाशं द्वितीये
दद्याद् द्रव्यं सहजभवने कुक्षिरोगं चतुर्थे ।
कार्यभ्रंशं तनयगृहगो वित्तलाभञ्च षष्ठे
द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽपि मृत्युम् ॥ ३ ॥
नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत्सुखम् ।
विविधमायगतः कुरुते धनं व्ययगतस्तु रुजं धनसक्षयम् ॥ ४ ॥

भौमस्य—

प्रथमगृहगतः क्षोणीसूनुः करोत्यरिजं भयं
क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः ।
अरिभयमतः पातालेऽर्थान्क्षिणोति हि पंचमे
रिपुगृहगतः कुर्याद्वित्तं रुजं मदने स्थितः ॥ ५ ॥
जनयति मदनस्थः शत्रुबाधां धराजो
दिशति च नवमस्थः कायपीडामतीव ।
शुभमपि दशमस्थो लाभगो भूरिलाभं
व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान् ॥ ६ ॥

बुधस्य—

बुधः प्रथमगो भयं दिशति सत्रं धने भयं
धनं रिपुभयान्वितं सहजगश्चतुर्थोऽर्थदः ।
अनिर्वृतिकरो भवेत्तनयगोऽरिगः स्थानदः
करोति मदनस्थितो बहुविधां शरीरव्यथाम् ॥ ७ ॥

अष्टमे शशिसुते धनवृद्धिं धर्मगस्तु महतीन्त्वनुपीडाम् ।
कर्मग सुखमथायगतोऽर्थं द्वादशे भवति वित्तविनाश ॥ ८ ॥

गुरोः—

भय जन्मन्यार्यो जनयति धनस्थेऽर्थमतुल
तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम् ।
सुख पुत्रस्थाने रुजमपि च कुर्यादरिगृहे
गुरुद्यूने पूजां धननिचयनाश च निधने ॥ ९ ॥

धर्मगतो धनवृद्धिकर स्यात् प्रीतिकरो दशमेऽमरपूज्य ।
स्थानधनानि ददाति स चाये द्वादशगस्तु नु मानसपीडा ॥ १० ॥

शुक्रस्य—

जन्मन्यरिक्षयकरो भृगुजोऽर्थदोऽर्थे
दुश्चिक्यग सुखकरो धनदश्चतुर्थे ।
स्यात् पुत्रदस्तनयगोरिगतोरिवृद्धि
शोकप्रदो मदनगो निधनेऽर्थदाता ॥ ११ ॥

जनयति विविधाम्बराणि धर्मे न सुखकरो दशमस्थितस्तु शुक्र ।
धननिश्चयकर स लाभसंस्थो व्ययभवनेपि धनागम करोति ॥ १२ ॥

शने —

वित्तभ्रंश रुगाग्नि दिनकरतनये जन्मराशि प्रपन्ने
वित्तक्लेश द्वितीये धनहरणकृति वित्तलाभ तृतीये ।
पाताले शत्रुवृद्धि सुतभवनगत पुत्रभृत्यार्थनाश
षष्ठे स्थानेऽर्थलाभ जनयति मदने दोषसघातमार्कि ॥ १३ ॥

शरीरपीडा निधने च धर्मे धनक्षय कर्मणि दौर्मनस्यम् ।
उपान्त्यगो वित्तमनर्थमन्त्ये शनिर्ददातीत्यवदद्वशिष्ठ ॥ १४ ॥

राहुकेत्वो —

राहुर्जन्मगतो भयश्च कलह सौभाग्यमानक्षय
वित्तभ्रशमहासुख नृपभय चार्थक्षय यच्छति ।
सताप कलहश्च वित्तमधिक शीघ्र विनाश नृणा
केतोस्तत्फलमेव राशिषु वदेच्छसन्ति गर्गादय ॥ १५ ॥

ऋक्षसन्धिगता खेटा राशिसन्धिगताश्च ये ।
एष्यराशेः फल दद्युर्भेऽभे तद्विपरीतगम् ॥ १६ ॥

वशिष्ठोऽपि—

भवनान्त्यगतास्त्वधिष्ण्य यदन्तगाश्च गगनचरा ।
दद्यु परभवनफल प्राग्भवनफल च वक्रिताश्चैते ॥ १७ ॥

बार्हस्पत्य —

पक्षो दशाहं च तथैकमासं सार्धं दशाहञ्च ततोऽर्धमासम्।
सोमादिसेटास्त्वतिचारचक्रे ददुः फलं पूर्वगृहे यदुक्तम् ॥ १८ ॥
वशिष्ठमाण्डव्यपराशरात्रिगर्गाङ्गिरोव्यासमुखा वदन्ति।
चक्रातिचारे सुरराजमन्त्री यत्रागतस्तत्र फलं ददाति ॥ १९ ॥

अथ सूर्यादिचक्रम्, तत्र प्रथमं सूर्यचक्रम्—

ऋक्षे सङ्क्रमणं यत्र तद्वक्त्रे विनियोजयेत्।
चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि च पादयोः ॥ २० ॥
चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत्।
अक्ष्णोर्द्वयं द्वयं योज्यं मूर्ध्नि द्वे एककं गुदे ॥ २१ ॥
रोगो लाभस्तथाध्वानं बन्धनं लाभ एव च।
ऐश्वर्यं राजपूजा च श्रममृत्युरिति क्रमात् ॥ २२ ॥

अथ चन्द्रचक्रम्—

चन्द्रचक्रं प्रवक्ष्यामि नराकारं सुशोभनम्।
शीर्षे षट्कं मुखे चैकं त्रीणि दक्षिणहस्तके ॥ २३ ॥
हृदये षट् प्रदातव्यं वामहस्ते तथा त्रयम्।
कुक्षौ च षट् प्रदातव्यं पादौ द्वौ द्वौ विनिर्दिशेत् ॥ २४ ॥
मुखे च द्रव्यहरणं शीर्षे लाभकरं स्मृतम्।
हानिदं दक्षिणे हस्ते हृदये च श्रियावहम् ॥ २५ ॥
वामहस्ते च रोगश्च कुक्षौ सौख्यप्रदायकम्।
पादयोर्हानिरोगौ च इत्युक्तं चन्द्रजं फलम् ॥ २६ ॥
चन्द्रनक्षत्रमारभ्य यावद्योधन्यनामभम्।
यत्राङ्गे नामनक्षत्रं तद्दिने च फलं लभेत् ॥ २७ ॥

अथ भौमचक्रम्—

भौमर्क्षधिष्ण्यान्मुखे त्रीणि नेत्रे त्रीणि विनिर्दिशेत्।
शीर्षे त्रीणि च धिष्ण्यानि बाह्वोर्द्वे द्वे विनिर्दिशेत् ॥ २८ ॥
कण्ठे द्वे हृदये पञ्च गुह्ये त्रीणि पदे चतुः।
मुखे रोगो धनं नेत्रे यशो मूर्ध्नि सुखं हृदि ॥ २९ ॥
कण्ठे श्रिया त्रयो गुह्ये पादे देशान्तरं व्रजेत्।
वामपाणौ भवेद्रोगो दक्षिणे शोक एव च ॥ ३० ॥

अथ बुधचक्रम्—

बुधचक्र प्रवक्ष्यामि बुधर्क्षान्नरमुत्तमम् ।
दक्षिणे च करे तावत्स्वे स्मपुष्टिकर स्मृतम् ॥ ३१ ॥

हृदये पञ्च लाभाय गुह्ये पञ्च सरोगता ।
त्रीणि दक्षिणपादे च वामे त्राणि विनिर्दिशेत् ॥३२॥

स्थानभ्रशो रोगपीडा कलह स्वजनै सह ।
बुधदेहस्य माहात्म्य कथित पूर्वसूरिभिः ॥ ३३ ॥

अथ गुरुचक्रम्—

शीर्षे चत्वारि राज्य युगलपरिमित दक्षिणे बाहुमूले
लक्ष्मी पादौ च षट्क हृदि रविसुभृश वामहस्ते रुज स्यात् ।
द्वे गुह्ये रोगकारी मदनशरमिते हृद्गते प्रीतिलाभौ
नेत्रे धिष्ण्य तृतीय सुखयति सतत जीवचक्रगुणज्ञै ॥३४॥

अथ शुक्रचक्रम्—

शुक्रचक्र प्रवक्ष्यामि शुक्रधिष्ण्यान्नराकृतिम् ।
मुखे त्रीणि महालाभो शीर्षे पञ्च शुभ सुखम् ॥ ३५ ॥

तृतीय दक्षिणे पादे क्लेशहानिकर सदा ।
तथैव वामपादे च त्रीणि धिष्ण्यानि सलिखेत् ॥ ३६ ॥

हृदये च धन सौख्य वामपादे चतुष्करे ।
सुखमित्रधनप्राप्ति शुक्र पुस शरीरग ।
गुह्ये च त्रीणि धिष्ण्यानि स्त्रीलाभसुखकारक ॥ ३७ ॥

अथ शनिचक्रम्—

शौरिर्यत्र तदास्ये भ करे चत्वारि दक्षिणे ।
विन्यसेदङ्घ्रियुग्मे षट् वामबाहौ चतुष्टयम् ॥ ३८ ॥

हृदये पञ्चऋक्षाणि क्रमाल्लोचनयोर्द्वयोः ।
मूर्ध्नि त्रीणि गुदे द्वे च मन्दस्य पुरुषाकृते ॥ ३९ ॥

वक्त्रस्थे जन्मभे रोगो लाभो वै दक्षिणे करे ।
स्यादध्वा च रण द्वन्द्वे बन्धो वामकरे नृणाम् ॥ ४० ॥

हृदये पञ्चके लाभो नेत्रे प्रीतिरुदाहृता ।
पूजा मूर्ध्नि परा नून गुदे मृत्यु विनिर्दिशेत् ॥ ४१ ॥

अथ ग्रहाणां दानानि, जातकाभरणे—

ये खेचरा गोचरतोऽष्टवर्गाद्दशाक्रमाद्वाप्यशुभा भवन्ति ।
दानादिना ते नितरां प्रसन्नास्तेनाधुना दानविधिं प्रवच्मि ॥४२॥

माणिक्यगोधूमसवत्सधेनुकौसुम्भवस्त्रं गुडहेमताम्रम् ।
आरक्तकं चन्दनमम्बुजञ्च वदन्ति दानं रवितोषहेतोः ॥ ४३ ॥

सद्वंशपात्रस्थिततण्डुलांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम् ।
क्षीराढ्यशांतं वृषभञ्च रौप्यं चन्द्राय दद्याद् घृतपूर्णकुम्भम् ॥४४॥

प्रवालगोधूममसूरिकाश्च वृषोऽरुणश्चापि गुडं सुवर्णम् ।
आरक्तवस्त्रं करवीरपुष्पं भौमाय दद्यात्सुगुणं हि ताम्रम् ॥४५॥

चैलञ्च नीलं किल धौतकांस्यं मुद्गाज्यगारुत्मतसर्वपुष्पम् ।
दासी च दन्तौ द्विरदस्य नूनं वदन्ति दानं विधुनन्दनाय ॥४६॥

शर्करा च रजनी तुरङ्गमं पीतधान्यमपि पीतमम्बरम् ।
पुष्परागलवणञ्च काञ्चनं प्रीतये सुरगुरोः प्रदीयताम् ॥४७॥

चित्राम्बरं शुभतरस्तुरगो धेनुश्च वज्रं रजतं सुवर्णम् ।
सुतण्डुलान्योत्तमगन्धयुक्तं वदन्ति दानं भृगुनन्दनाय ॥ ४८ ॥

माषाश्च तैलं विमलेन्द्रनीलं तिलाः कुलत्थो महिषो च लोहम् ।
सदक्षिणं चेति वदन्ति नूनं तुष्टाय नूनं रविनन्दनाय ॥ ४९ ॥

गोमेदरत्नं च तुरङ्गमश्च सुनीलचैलानि च कम्बलञ्च ।
तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदन्ति ॥ ५० ॥

वैदूर्यरत्नं सतिलं महाज्ञः सुमङ्गलञ्चापि मदो मृगस्य ।
शस्त्रञ्च केतोः परितापहेतोरुदीरितं दानमिदं मुनीन्द्रैः ॥ ५१ ॥

अथ जन्मनक्षत्रे ग्रहणफलम्, वशिष्ठः—

यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ ।
तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः ॥ ५२ ॥

ज्योतिर्निबन्धे फलप्रदीपे—

ग्रहणं जन्मनक्षत्रे जायते शशिसूर्ययोः ।
यस्य तस्य शुभं हानिर्घोररोगाः पराभवः ॥ ५३ ॥

ज्योतिःपराशरः—

यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ ।
तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः ॥५४॥

मार्गवीयविशेषोपि—

यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते ।
राज्यभंगं स्वकुन्नाशं मरणं चात्र निर्दिशेत् ॥ ५५ ॥

राज्यस्य नक्षत्रे अभिषेकनक्षत्रे । जन्मराशेः सकाशाद् ग्रहणराशिपर्यन्तं गणना कार्या ततः फलं वाच्यम् ।

तत्फल देवज्ञमनोहरे—

घातं हानिमथश्रियं जननभाद् वत्तिश्च चिन्तां क्रमात् ।
सौख्यं दारवियोजन च कुरुते व्याधिश्च यानक्षयम् ।
सिद्धिं लाभमपायमर्कशशिनोः षण्मासमध्ये ग्रहः ॥५६॥

राजमार्तण्डे—

सप्ताष्टजन्मगे षष्ठे चतुर्थे दशमेपि वा ।
नवमे च तथा चन्द्रे न कुर्याद्राहुदर्शनम् ॥ ५७ ॥

श्रीपतिव्यवहारनिर्णये वशिष्ठः—

जन्मभे जन्मराशौ च षष्ठाष्टमगते तयोः ।
चतुर्थे द्वादशे चन्द्रे न कुर्याद्राहुदर्शनम् ॥ ५८ ॥
मासदर्शनमात्रेण चार्थहानिर्महद्भयम् ।
जायते नात्रसन्देहस्तस्मात्तत्परिवर्जयेत् ॥ ५९ ॥

वराहसंहितायाम्—

जन्मसप्ताष्टरिष्फाङ्कं दशमस्थे निशाकरे ।
दिष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधनेपि च ॥ ६० ॥

तथा च—

वैनाशिकर्क्षे दृष्ट ग्रहणं सुधांशुभास्करयोः ।
जनयति रोगं बहुधा क्लेशं वित्तक्षय चाशु ॥ ६१ ॥
जन्माष्टजा यान्त्यथ धर्मसंस्थे निशाकरे जन्मसु तारकासु ।
दृष्ट्वा तमश्चन्द्रमसं प्रयत्नादभ्यर्च्य दद्यात् कनकं द्विजाय ॥ ६२ ॥

अत्र चन्द्रमसमित्युपलक्षणम्, उपक्रमे सुधांशुभास्करयोरिति दर्शनात् सूर्यपरमपि । वैनाशिकर्क्षं त्रयोविंशनक्षत्र इति केचित् । वस्तुतस्तु वैनाशिकपदं निधनतारापर, निधनेत्येकवाक्यत्वात् । वैनाशिकपदस्य गर्गेण विपत्करादिसाहचर्यात् । त्रयोविंशनक्षत्रस्य प्रत्यरिपदप्राप्तत्वादपि सतमतारार्थ। पठितत्वाच्च यथा—

विपत्करप्रत्यरिसंज्ञितेषु वैनाशिकर्क्षेषु कृतं हि कर्म ।
सर्वं नृणां निष्फलमेव तस्मात्क्षेपि तत्रास्ति शुभं न किञ्चित् ॥६३॥

ज्योतिःसारसागरे—

राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते
तस्माद्वेदहुताशशङ्करशरा कल्याणदा राशयः।
मध्यस्था रविसायकाङ्कदशमा सामान्यभोगप्रदा
श्चन्तगतातुरगाष्टमाः खलु नृणां यच्छन्ति नेष्टं फलम् ॥ ६४ ॥

अथ ग्रहणदोषोपशमनञ्च दीपिकायाम्—

ग्रहण ग्रहपीडितनाडीनक्षत्रदोषोपशमनाय।
सहयवपुष्पैः स्नायात् फलिनीफलचन्दनोशीरैः ॥ ६५ ॥

फलिनीति प्रियङ्गुः। फलिनी फलीत्यमरः। वातीफलेति केचित्। नाडीनक्षत्राणि चाद्यदशमषोडशाष्टादशत्रयोविंशतिपञ्चविंशतयः।

ज्योतिःसारे—

ताम्रपात्रं तिलैः पूर्णं पूर्णं वागरुसर्पिषा।
भास्करग्रहणे दद्यान्नाडीदोषापशान्तये ॥ ६६ ॥
घृतकुम्भोपनिहितं शरावं नवनीतपूरितं दद्यात्।
नाड्यादिदोषोपशान्त्यै द्विजाय दोषाकरग्रहणे ॥ ६७ ॥

ज्योतिर्निबन्धे कालनिर्णये—

यस्मिन् राशौ तपनशशिनोः सैंहिकेयावमर्दः-
स्तद्राश्याना भवति नियतं ग्रामपुंसां विनाशः।
तस्माच्छान्तिर्मुनिभिरुदिता तत्परो लोकपूर्वां
कुर्याद्दानादिभिरिह नृणां नाशमायात्यरिष्टम् ॥ ६८ ॥

दानमपि तत्रैव—

सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम्।
सदक्षिणं सवस्त्रञ्च श्रोत्रियाय निवेदयेत् ॥ ६९ ॥
सौवर्णं राजतं चापि बिम्बं कृत्वा स्वशक्तितः।
उपरागोद्भवक्लेशच्छिदे विप्राय कल्पयेत् ॥ ७० ॥

दानमन्त्रोऽपि तत्रैव—

तमोमय महाभीम सोमसूर्यविमर्दन।
हेमनागप्रदानेन मम शान्तिप्रदो भव ॥ ७१ ॥

स्कन्दपुराणेऽपि—

गोदानं भूमिदानञ्च स्वर्णदानं विशेषतः।
ग्रहक्लेशविनाशाय दैवज्ञाय निवेदयेत् ॥ ७२ ॥

अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणे शान्तिमाह वशिष्ठ —

यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ।
तस्य व्याधि भवदेव शान्ति वक्ष्ये समासत ॥ ७३ ॥
मण्डल चतुरस्र तद्गोमयेन विलेपयेत्।
गृहस्यैशानदिग्भागे वर्णके समलङ्कृते ॥ ७४ ॥
स्थापयेच्चतुर कुम्भास्तत्र तान्सागरात्मकान्।
सर्ववेदात्मकान् स्मृत्वा सर्वतीर्थात्मकान् शुभान् ॥ ७५ ॥
पञ्चत्वक्पल्लवोशीरशतौषधिसमन्वितान् ।
मृत्तिकारत्नहेमेभदन्तगुग्गुलुचन्दनै ॥ ७६ ॥
पञ्चगव्यामृतभ्राजस्फटिकै सर्षपाम्बरै ।
शङ्ख कुकुमतीर्थाम्बुरोचनै पद्मकैर्युतान् ॥ ७७ ॥
चत्वार प्राङमुखा विप्रा प्रार्थयेयु पृथक् पृथक् ।
वरलिङ्गैर्वारुणै सूक्तै स्वस्तिवाचनपूर्वकै ॥ ७८ ॥
तिलहोमो व्याहृतिभिः सहस्र चाष्टसयुतम् ।
एव कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् ॥ ७९ ॥
आमन्त्र्य नवभिर्मन्त्रै कुम्भान्सस्पर्शपूर्वकम् ।
एतानेव ततो मन्त्रान्स्वर्णपट्टे ततो लिखेत् ॥ ८० ॥
कर्त्तु शिरसि त बध्वा वाग्भिर्गोवेदमन्त्रकै ।
स्वमन्त्रितै कुम्भजलै स्नाप्य नीराजयेत्तत ॥ ८१ ॥
दद्यात्तत्तद्ग्रहद्वेभ्य शुक्लमाल्याम्बर शुचि ।
ऋत्विग्भ्यो दक्षिणा दद्याच्छिष्टेभ्यश्च स्वशक्तित ॥ ८२ ॥
योऽसौ वज्रधरो देव आदित्याना प्रभु मत ।
सहस्रनयनश्चन्द्रग्रहपीडा व्यपोहतु ॥ ८३ ॥
मुख य सर्वदेवाना सप्तार्चिरमितद्युति ।
चन्द्रोपरागसम्भूतमग्नि पीडा व्यपोहतु ॥ ८४ ॥
य कर्मसाक्षी लोकाना धर्मो महिषवाहन ।
यमश्चन्द्रोपरागाणा ग्रहपीडा व्यपोहतु ॥ ८५ ॥
रक्षोगणाधिप साक्षात्प्रलयानलसन्निभ ।
खड्गव्यग्रोऽतिकायश्च रक्ष पीडा व्यपोहतु ॥ ८६ ॥
नागपाशधरो देव सदा मकरवाहन ।
वरुणाम्बुपति साक्षाद् ग्रहपीडा व्यपोहतु ॥ ८७ ॥
प्राणरूपो हि लोकाना वायु कृष्णमृगप्रिय ।
वायुश्चन्द्रोपरागोत्थ पीडामत्र व्यपोहतु ॥ ८८ ॥

योऽसौ निधिपतिर्देव: खड्गशूलगदाधर ।
चन्द्रोपरागे कलुष पीडाञ्चापि व्यपोहतु ॥ ८६ ॥
योऽसौ पिन्दुधरो रुद्रः पिनाकी वृषवाहन ।
चन्द्रोपरागपापानि स नाशयतु शङ्करः ॥ ९० ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्ण्वर्कयुक्तानि तानि पाप दहन्तु मे ॥ ९१ ॥
आमन्त्रणे लेखनोक्ता एते वै नवमन्त्रका ।
अर्चयित्वा पितॄन्देवान् गोभूस्वर्णाम्बरादिभि ॥ ९२ ॥
अनेन विधिना यस्तु ग्रहस्नान समाचरेत् ।
न तस्य ग्रहपीडा स्यान्न च बन्धुधनक्षयः ॥ ९३ ॥
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभा ।
सूर्यग्रहेऽप्येषमेव सूर्यनाम्ना विधीयते ॥ ९४ ॥

इति वृद्धवसिष्ठोक्तग्रहणशान्ति ।

अत्र ग्रहणं दृष्ट्वा स्नानदानादिक कर्तव्यमवि । तथा हि वृद्धवशिष्ठ —

सर्वेषामेव वर्णाना सूतकं राहुदर्शने ।
सचैल तु भवेत्स्नानं सूतकान्न विवर्जयेत् ॥ ९५ ॥

षट्त्रिंशन्मते—

सर्वेषामेव वर्णानां सूतक राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत घृतमन्न विवर्जयेत् ॥ ९६ ॥

तस्मिन्स्नानमावश्यकमेव । तथा च वृद्धवशिष्ठ —

सक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानव ।
सप्तजन्मसु कुष्ठी स्यात् दुःखमागी च सर्वदा ॥ ९७ ॥

अशौचेपि स्नान कर्तव्यं श्राद्ध दानञ्च न कर्तव्यम् । तथा च संवत्सरप्रदीपगङ्गावाक्यावल्यो: स्मृति —

सूतके मृतके चैव न दोषो राहुदर्शने ।
स्नानमात्रन्तु कर्तव्यं दान श्राद्धविवर्जितम् ॥ ९८ ॥

भविष्ये—

चन्द्रसूर्यग्रहे चैव मृतानां पिण्डकर्मसु ।
महातीर्थे तु सम्प्राप्ते क्षतदोषो न विद्यते ॥ ९९ ॥

लिङ्गपुराणे—

चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेपि च।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥ १०० ॥

चन्द्रसूर्योपरागे सति भोजनं न कर्त्तं मुक्तिं दृष्ट्वा तु कर्त्तव्यमिति।

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव।
ग्रहणन्तु भवेत्तत्र तत्पूर्वां भोजनक्रियाम् ॥ १०१ ॥
नाचरेत्सग्रहे चैव तथैवास्तमुपागते।
यावत्तस्य नोदयः स्यान्नाश्नीयात्तावदेव तु ॥
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि ॥ १०२ ॥

इति विष्णुधर्मोत्तरवचनेन सामान्यतो निषेधात्। तथैवेति सग्रहत्वेनैवेत्यर्थः।

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्राच्छुद्धिरिष्यते ॥ १०३ ॥

इति देवलवचनेन सामान्यतः प्रायश्चित्तश्रवणाच्च। तस्मिन्नेव दिने तद्दिवसीयनिषिद्धकालाभ्यन्तरे।

आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः।
पारणञ्चोपवासञ्च न कुर्यात्पुत्रवान्गृही ॥ १०४ ॥

इति निषेधात् गृहस्थस्य पुत्रिणो ग्रस्तास्तेपि नोपवासः, किन्तु ग्रहणानन्तरं पूर्वं वा निर्दोषकाले तेन किञ्चिद् भक्ष्यमिति संवत्सरप्रदीपः। ग्रहणभोजनपूर्वनिषेधे विशेषमाह वृद्धगौतमः—

सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥ १०५ ॥

ग्रस्तोदये विशेषमाह वृद्धवशिष्ठः।

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ॥ १०६ ॥

बालवृद्धातुरविषये वाचस्पतिमिश्रधृ० मार्कण्डेयपुराणवचनम्।

सायाह्ने ग्रहणञ्चेत्स्यादपराह्ने न भोजनम्।
अपराह्ने न मध्याह्ने मध्याह्ने चेन्न सङ्गवम् ॥ १०७ ॥
सङ्गवे ग्रहणं चेत्स्यान्न पूर्वाह्नभोजनक्रियाम्।

अत्र ग्रहणे पुरश्चरणादिकं कर्तव्यम्। तथा च पुरश्चरणचन्द्रिकादिषु—

ग्रहणेऽर्कस्य चन्द्रस्य शुचिः पूर्वमुपोषितः।
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ॥ १०८ ॥

यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषित ।
ग्रहणादिविमोक्षान्त जपेन्मंत्रं समाहित ॥ १०९ ॥

अनन्तर दशांशेन क्रमाद्धोमादिकञ्चरेत् ।
तदन्ते महती पूजां कुर्याद् ब्राह्मणभोजनम् ॥ ११० ॥

ततो मन्त्रप्रसिद्ध्यर्थं गुरु सपूज्य तोषयेत् ।
एव च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति ॥ १११ ॥

अथवान्यप्रकारेण पुरश्चरणिके विधिः ।
चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ॥ ११२ ॥

स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्र समाहितः ।
जपाद्दशांशतो होम ततो होमाच्च तर्पणम् ॥ ११३ ॥
एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा ॥ ११४ ॥

गोपालतर्पणे तु होमसमसंख्यत्वम् । यथा—

इह गोपालमन्त्राणा तर्पणे होमसंख्यया ।
सम ज्ञेयन्तु सर्वेषामित्यागमविदो विदुः ॥ ११५ ॥

पुरश्चरणं दानचन्द्रिकायाम्—

होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणम् ।
षड्गुणं वाष्टगुणितं यथासंख्यं द्विजातय ॥ ११६ ॥

तेषां स्त्रीणान्तु विज्ञेयस्तेषामेव समो जपः ।
सवर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः ॥ ११७ ॥

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तमहम्यश्चात्तर्पयामि नमोऽन्तकः ॥ ११८ ॥
तर्पणस्य दशांशेन मार्जन कथितं किल ।
तस्यैव देवरूपं ध्यात्वा मौन प्रपूज्य च ॥ ११९ ॥
नमोन्त मनुमुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तमहम्पश्चादभिषिन्याम्यनेन तु ॥ १२० ॥
तोयैरञ्जलिना शुद्धैरभिषिञ्चेत्स्वमूर्धनि ।
मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ॥ १२१ ॥

विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्यतः ।
जपोर्चापूर्वको होमतर्पणञ्चाभिषेचनम् ॥ १२२ ॥
भूदेवपूजन पञ्चप्रकारैश्च पुरस्क्रिया ॥ १२३ ॥

अथ ग्रहणस्य सम्भव तत्स्वरूप फलञ्चाह वाराह —

भत्रिपादान्तरे राहो केतोर्वा संस्थितो रवि ।
चतुष्पादान्तरे चन्द्रस्तदा सम्भवते ग्रहः ॥ १२४ ॥

भत्रिपादान्तरे राहुभोग्यनक्षत्रस्य नक्षत्रयोवा त्रिपादान्यन्तरे ।

यस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगत शशी ।
पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी ॥ १२५ ॥

एतदपि पूर्ववचनानुसारेण चतुष्पादाभ्यन्तरे ज्ञेयम् तस्मात्तमारभ्य तत्स्थो वेत्यर्थः ।

कृष्णपक्षतृतीयाया मासर्क्षं यदि जायते ।
ततस्त्रयोदशे सूर्ये राहुणा ग्रस्यते रवि ॥ १२६ ॥

मासर्क्षं कार्तिकादौ कृत्तिकादिः । एतदपि भत्रिपादान्तरे सति ज्ञेयम् । राहो पादभोगश्च मासद्वयेन ।

रविभौमनवांशे तु निरभ्र मासमादिशेत् ।
बुधशौरिनवांशे तु मलिन क्षुद्रवर्षणम् ॥ १२७ ॥

गुरोरंशान्मासाद्य दृश्यते सबलाहक ।
शशिशुक्रनवांशे तु प्रावृट्काले महज्जलम् ॥ १२८ ॥

अन्यथाऽव्यक्तभूमौ तौ दृश्यते छादिताम्बरौ । तौ चन्द्रार्कौ ।

श्वेते क्षेम सुभिक्ष ब्राह्मणपीडाश्च निर्दिशेद्राहौ ।
अग्निभयमनलवर्णे पीडाश्च हुताशवृत्तीनाम् ॥ १२९ ॥

हरिते रोगोनुताप सस्यानामीतितो भीति ।
कपिले शीघ्रगसत्वान्म्लेच्छध्वंसोऽथ दुर्भिक्षम् ॥ १३० ॥

अरुणकिरणरूपे वृष्ट्यो विहगपीडा च ।
धूमाभे क्षेम सुभिक्षमादिशेन्मन्दवृष्टिञ्च ॥ १३१ ॥

कापोतारुणकपिले श्यामाभे क्षुद्भय विनिर्दिशेत् ।
कापोत शूद्राणा व्याधिकर कृष्णवर्णश्च ॥ १३२ ॥

विमलकपिलपीताभो वैश्यध्वंसी भवत्सुभिक्षाय ।
सार्चिष्यग्निभय गैरिकरूपे च युद्धानि ॥ १३३ ॥

अर्चिषा तेजसा वर्तमाने सार्चि तस्मिन्सार्चिषि राहौ ।

दूर्वाकाण्डश्यामे हरिद्रे चापि निर्दिशेन्मरकम् ।
अशनिभयसम्प्रदायी पाटलिकुसुमोपमो राहु ॥ १३४ ॥

अथ रव्यादीनां ग्रहाणां प्रीत्यर्थं धार्यरत्नानि ।

यदुक्त कश्यपेन—

सूर्यादीनां सुतुष्ट्यै च माणिक्यं मौक्तिकन्ततः ।
सविद्रुम मरकत पुष्परागञ्च वज्रकम् ।
नीलगोमेदवैदूर्यं धार्यं शश्वद् दृढ क्रमात् ॥ १३५ ॥

अथ योगादिदुष्टत्वनाशनार्थं दानम् ।

दीपिकायाम्—

योगस्य हेमकरणस्य च धान्यमिन्दोः
शङ्खञ्च तण्डुलमणी तिथिवारयोश्च ।
ताराबलाय लवणान्यथ गाश्च राशे-
र्दद्याद् द्विलाय कनक शुचि नाडिकायाः ॥ १३६ ॥

इति कृतितत्त्वे गोचरप्रकरणम्

———

# अथ संक्रान्तिप्रकरणम्

श्रीपति —

हरिपद स्थिरभे रविसङ्क्रमाद् द्वितनुभे षडशीति मुखम्भवेत् ।
तदगवागयने मृगकर्किणो क्रियतुलाधरयोर्विषुवं स्मृतम् ॥ १ ॥

रत्नावल्याम्—

सङ्क्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।
मानार्धं भास्करे पुण्यमपूर्णं शर्वरीदले ॥ २ ॥
सम्पूर्णे भूमयोर्द्वयमतिरेके परेऽहनि ।
निरशका यदा भानुः पूर्वापरदिनद्वये ॥ ३ ॥
पूजयेद्वासर पूर्वमपरं पुण्यवर्जितम् ।
निशार्धे चलिते भानौ निरशे च दिनद्वये ॥ ४ ॥
पूर्वेऽहनि च कर्तव्य स्नानदानजपादिकम् ।
षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये ॥ ५ ॥
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ।
आदौ पुण्यं विजानीयाद्यदि भिन्ना तिथिर्भवेत् ॥ ६ ॥
अयनेषु विकल्पो यस्तन्मे निगदित शृणु ।
यावद्विंशकलाभुक्तास्तत्पुण्याञ्चोत्तरायणे ॥ ७ ॥

अत्रेयं व्यवस्था

सर्वासु रात्रिसङ्क्रान्तिषु मानार्धं दिनमानार्धं पुण्यम् । तत्रापि प्रथमार्धरात्रि-पूर्वदिने प्रहरद्वयोपरि प्रहरद्वय यावत् पुण्यम् । अर्धरात्रोपरि सङ्क्रान्तच-ग्रिमदिने पुण्यकाल· प्रहरद्वय यावत् । दिवातनसङ्क्रान्तिषु षडशीतिमुखम् इति वाक्येन व्यवस्था । दिवातनविष्णुपद्यां षोडशपूर्वं षोडशोत्तरदण्डाः पुण्यकालः । सम्पूर्णेऽर्धरात्रे पूर्वापरदिनद्वयेपि पुण्यकाल । तत्रापि यद्येका तिथिस्तदा पूर्वदिन एव प्रहरद्वयोपरि । अन्यथा त्वग्रिमदिने प्रहरद्वय यावत् । एकतिथित्वेऽप्यर्धरात्रे व्यतीते यदि सङ्क्रान्तिर्भवति तदा त्वग्रिमपूर्वार्धं पुण्यमित्यर्थः । दिनद्वयेपि निरशे पूर्वदिनमेव पुण्यकाल· । निराकराहिते ड प्रथमांश एव । मन्दादिसङ्क्रान्तिषु च त्रिचतुरादयो दण्डा मुख्या पुण्यकालाः । उत्तरायणे सङ्क्रान्तौ सङ्क्रान्तिकालानन्तरं विंशतिदण्डपर्यन्तं पुण्यकालः ।

निशार्कचारान्निकटं दिनार्धे
दिवार्कचारान्निकटाष्टिघट्यः ।
ताः कर्कटे प्राक् कथितेतरेऽर्वाक्
पुण्याय विष्वग् घटगोलिसिंहे ॥ ८ ॥

अस्यार्थ —

निशार्कचारान्निकटं दिनार्धे यद्यर्धरात्राभ्यन्तरे सञ्चारः तदा पूर्वं दिनं पुण्यं, यदा परभागे भवति तदाग्रिमदिने पुण्यमित्यर्थः । दिनार्कचारात् यदा निकटाष्टिघट्य, निकटे षोडशघटिका भवन्तीत्यर्थः । ताः घट्य कर्कटे घटगोलिसिंहे प्राक् पूर्वमेव पुण्य भवति ।

विश्वस्तुलासंक्रमे मेषसंक्रमे च उभयतः पूर्वञ्चापरञ्च पुण्यम्, इतरे मिथुन-क[illegible] निर्गलित क्रियते । यद्यर्धरात्रात्प्राक् संक्रान्तिस्तदा पूर्वदिनस्योत्तरार्धे पुण्यं यद्यर्धरात्रात्प्राक् संक्रान्तिस्तदा पूर्वदिनस्योत्तरार्धे पुण्यं यद्यर्धरात्रादुपरि तदोत्तरदिनस्य पूर्वार्धमेव पुण्यमित्यर्थः ।

उक्तञ्च ब्रह्मसिद्धान्ते—

भवनान्ते विस्वमध्य रात्रार्धात्प्रागुदेति चेत् ।
स्नानदानादिमध्याह्ना कुर्यादूर्ध्वगते दिने ॥ ९ ॥
रात्र्यर्धादुपरि क्षेत्रं याति चेदन्यथार्यमा ।
अह्न्यागामिनि मध्याह्नात्पूर्वं स्नानादि पुण्यदम् ॥ १० ॥

वृद्धवशिष्ठेऽपि—

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥ ११ ॥
अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ १२ ॥

अत्र दिनवद्रात्रौ पुण्यं चेत्स्नानदानादिकं कुतो न क्रियते ? इति नाशङ्कनीयं, यतो हि रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषत. इति सुमन्तुवाक्यशेषात् । अत्र मध्यरात्रे संक्रान्तिश्चेत् पूर्वदिनार्धात्परं परदिनार्धात्पूर्वं दिनार्धे दिनद्वयेऽपि पुण्यम् ।

उक्तञ्च वृद्धवशिष्ठेन—

पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥ १३ ॥

पुन सिद्धान्तेपि—

यद्यर्धरात्र एव स्यात्सम्पूर्णे सक्रमो रवे ।
तदा दिनद्वय पुण्य स्नानदानादिकर्मसु ॥ १४ ॥

मुक्त्वा मकरकर्कटाविति । यदि सूर्योदयात्पूर्वं कर्कटसंक्रमण स्यात्तदा पूर्वदिन मेव पुण्य नोत्तरदिने । तथा यदि सूर्यास्तादनन्तरं मकरसक्रान्ति स्यात्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने ।

उक्त वृद्धगर्गेण—

यदास्तमनवेलाया मकर याति भास्कर ।
प्रदोषे चार्धरात्रे वा स्नान दान परेहनि ॥ १५ ॥
अर्धरात्रे तदूर्ध्वं वा सक्रान्तौ दक्षिणायने ।
पूर्वमेव दिन ग्राह्य यावन्नोदयते रवि ॥ १६ ॥

भविष्येपि—

कार्मुकन्तु परित्यज्य झष सक्रमते रवि ।
प्रदोषे वाधरात्रे वा स्नान कुर्यात्परेऽनि ॥ १७ ॥
मिथुनात्कर्कसक्रान्तिर्यदि स्यादशुमालिन ।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वत ॥ १८ ॥

प्रदोषलक्षण स्कन्दपुराणे—

त्रिमुहूर्त प्रदोष स्याद्रवावस्त गते सति ॥ १९ ॥

अत्रोदयसन्ध्यायां कर्कसक्रान्तिश्चेत्तदा परदिने पुण्यम् । अस्तसन्ध्यायां मकरसक्रान्तिश्चेत्तदा पूर्वदिने पुण्यम् ।

यथोक्त नारदेन—

सूर्योदये च सध्याया यदि याम्यायन भवेत् ।
तदोदयादह पुण्य पूर्वाह्न पूर्वतो यदि ॥ २० ॥
सूर्यास्तमनसध्याया यदि सौम्यायन भवेत् ।
तदह पुण्यकाल स्यात्परतश्च परेहनि ॥ २१ ॥

अत्र यद्युदयसध्यात प्राक कर्कसक्रान्तिस्तदा प्राग्दिन एव पुण्यकालो नो त्तरदिने । तथा यद्यस्तसन्ध्यामतिक्रम्य मकरसक्रान्तिस्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने इति निष्कृष्टार्थ । एव निर्णीते पुण्यकाले स्नानदानाद्यवश्य विधेयम् ।

तत्र स्नानदानाद्यकुर्वतश्च प्रत्यवायमाह वसिष्ठः—

इति सञ्चिन्त्य विनिर्णयमादेष्टव्य सदैव दैवज्ञै ।
विषुवत्ययने ग्रहणे सक्रान्तौ पुण्यदिवसे वा ॥ २२ ॥

पितृतृप्तिं न करोति हि दग्वाशाया भ्रमति तस्य पिता ।
आगतगतसमयेऽपि च करोति यद्दानजपहोमाद्यम् ।
ऊषरे वापितबीज यद्वत्तन्निष्फलं भवति ॥ २३ ॥
सङ्क्रान्तिपुण्यकालेषु स्नानदानादि फलमाह भरद्वाज —
षडशीत्यान्तु यद्दानं यद्दानं विषुवद्वये ।
दृश्यते सागरस्यान्तः तस्यान्तो नैव दृश्यते ॥ २४ ॥
वृद्धवशिष्ठोऽपि —
अयने कोटिपुण्यञ्च सहस्रं विषुवे फलम् ॥ २५ ॥
शातातप —
सङ्क्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभि ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥ २६ ॥
मृते जन्मनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययो ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ २७ ॥
सङ्क्रान्त्या पञ्चदश्या च द्वादश्या श्राद्धवासरे ।
वस्त्रं न पीडयेत्तत्र न च क्षारेण योजयेत् ॥ २८ ॥
सङ्क्रान्त्याञ्च त्रयोदश्या पक्षान्ते नवमीदिने ।
सप्तम्या रविवारे च स्नानमामलकैस्त्यजेत् । २९ ॥
शातातप —
रविवारेऽर्कसङ्क्रान्त्या षष्ठ्या वै सप्तमीदिने ।
आरोग्यकामस्तु नरो निम्बपत्र न भक्षयेत् ॥ ३० ॥
कृत्यचिन्तामणौ—
मसूरनिम्बपत्राभ्या योऽत्ति मेषगते रवौ ।
अपि रोषान्वितस्तस्य तक्षक किं करिष्यति ॥ ३१ ॥
स्मृति —
मेषादौ सक्तवो देया वारिपूर्णा च गर्गरी ॥ ३२ ॥
वारिदाने मन्त्र —
एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मक ।
अस्य प्रदानात्सफला मम सन्तु मनोरथा ॥ ३३ ॥
वैशाखे यो घट पूर्णं सभोज्य वै द्विजन्मने ।
दद्यात्स्वयमुक्त्वा राजेन्द्र स याति परमाङ्गतिम् ॥ ३४ ॥

पूर्णछेनेति शेष ।

यो ददाति हि मेषादौ सक्तूनम्बुघटान्वितान् ।
पितनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते ॥ ३५ ॥
विप्रेभ्यः पादुके छत्रं पितृभ्यो विष्णवे शुभम् ।
सक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
साय सन्ध्याञ्च कुर्वीत कृते च पितृहा भवेत् ॥ ३६ ॥

अथ सक्रान्तेर्दिनरात्रिविभागत्वेन फलान्याह, नारदः—

पूर्वाह्णे नृपतिं हन्ति विप्रान्मध्यदिने विशः ।
अपराह्णे गते शूद्रान्प्रदोषे च पिशाचकान् ॥ ३७ ॥
निशि रात्रिचरान्नाट्यकारानपररात्रके ।
गोपानुषसि सन्ध्यायां लिङ्गिन रविसंक्रमे ॥ ३८ ॥

सक्रान्तेः क्रूरसौम्यवारपरत्वेन फलविशेषमाह वशिष्ठ —

रविरविजभौमवारे संक्रान्तौ दिनकरस्य हि तन्मासे ।
पित्तकफानिलजामयपीडानरपतिकलहस्तु वृष्टिश्च ॥ ३९ ॥
बुधगुरुसितचन्द्राहे सति सक्रान्तावनामय नृणाम् ।
क्षितिपतिनिकरक्षेमं सस्यविवृद्धिर्विधर्मिणा पीडा ॥ ४० ॥

अत्र मेषसक्रान्तौ विशेषमाह कश्यपः—

यदा मेषगतः सूर्यो भरण्यादिचतुष्टये ।
सस्यवृद्धिर्भवेत् तत्र वृद्धिरार्द्राचतुष्टये ॥ ४१ ॥
मघादिदशके हानिः क्षेमं चानुभवेषु च ॥ ४२ ॥

यस्मिन् दिने मेषसक्रान्तिस्तद्दिने चन्द्रवशात्फलमूह्यमिति फलितार्थः ।

अथ जन्मनक्षत्रे सक्रान्तिफल दीपिकायाम्—

यस्य जन्मर्क्षमासाद्य रविसक्रमणं भवेत् ।
तन्मासाभ्यन्तरे तस्य रोगः क्लेशो धनक्षयः ॥ ४३ ॥

तत्र शान्तिकर्मापि तत्रैव—

तगरसरोरुहपत्रै रजनीसिद्धार्थलोध्रसयुक्तैः ।
स्नानं जन्मन्यर्क्षे रविसक्रान्तौ नृणा शुभदम् ॥ ४४ ॥

अथ संक्रान्तिगणनमाह वराहः—

शाको नभो नन्दभवैर्विहीनश्शैलाम्बराकाशशराङ्कनिघ्नः ।
युक्तस्ततः शून्यमृगाङ्कनन्दैः खण्डेन योग्यः खखनागहार्यः ॥४५॥

लब्धस्वरैर्वार इहार्कगत्या शेषा तथा षट्प्रिहुताखखेभैः ।
तथा रवेर्मुक्तिविहीनलब्धा दण्डा करैर्वै पलसंयुता च ॥ ४६ ॥

प्रथममिह हि शून्यं बाणरामाग्निपक्षा-
शरनगगगनार्थाः शैलनागाग्निदस्राः ।
कृतमुनिशशिबाणा व्योमनागाङ्कचन्द्रा
रसगुणनवरामाः पक्षबाणाग्निबाणाः ॥ ४७ ॥
गगनहुतखचन्द्राः पञ्चगोऽव्योमपक्षा
वसुहुतयमरामा व्योमचन्द्रार्घवेदाः । (?)
इति वदति वराहः शुद्धसंक्रान्तिखण्डान् ॥ ४८ ॥

अथ विषुवसंक्रान्तिचक्रं ज्योतिषसारे—

शीर्षे सप्त मुखे त्रीणि हृदये पञ्च निर्दिशेत् ।
त्रितयं हस्तपादेषु महाविषुवमक्रमात् ॥ ४९ ॥

फलम्—

मस्तके भूपतेः सौख्यं वदने पटुता शुभः ।
हृदये च धनाप्त्यर्थोर्थमाप्तिर्दक्षिणे करे ॥ ५० ॥
वामपाणौ महद्दुःखं सुखं पादे च दक्षिणे ।
भ्रमणं वामपादे च कथितं विषुवत्फलम् ॥ ५१ ॥

अथ जलविषुवचक्रम्—

षण्मूर्ध्नि वदने पञ्च चत्वारि हृदये तथा ।
त्रितयं हस्तपादेषु पयोविषुवमक्रमात् ॥ ५२ ॥

फलम्—

मानं मूर्ध्नि मुखे वैरं हृदये सुखसम्भवः ।
भोगो दक्षिणहस्तादौ त्रासश्च वामयोर्नृभे ॥ ५३ ॥

वामयोर्वामपादयोरित्यर्थः ।

अथोत्तरायणं चक्रम्—

शीर्षे पञ्च मुखे त्रीणि हस्तयोश्च द्वयं त्रयम् ।
उत्तरायणभाद्दैव सुनक्षत्रस्थिते फलम् ॥ ५४ ॥

फलम्—

शीर्षेऽर्थलाभो वदने सुखानि
दक्षाङ्घ्रिपाण्यो हृदये च सौख्यम् ।

नाभौ सुख वामकरे च नाशो
गुह्ये भय वामपदे प्रवास ॥ ५५ ॥

अथ दक्षिणायनचक्रम्—

शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च हस्तयो ।
अष्टौ पादद्वयेऽप्यष्टौ दक्षिणायनभात्क्रमात् ॥ ५६ ॥

फलम्—

शीर्षे मान मुखे विद्यात् हृदये वित्तसचय ।
प्रवास स्यात्करे वामे भिक्षाशोभे च दक्षिणे ॥५७॥
नि फल वामपादे च किंचिल्लाभश्च दक्षिणे ॥ ५८ ॥

अथ विष्णुपदीचक्रम्—

ऋक्षे सक्रमण यत्र विष्णुपद्या मुखे च तत् ।
चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये ॥ ५९ ।
चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत् ।
अक्ष्णोर्द्वय द्वय योज्य मूर्ध्नि द्वे चैकम गुदे ॥ ६० ॥

फलम्—

रोगी भोगस्तथा पन्था बन्धन लाभ एव च ।
ऐश्वर्य राजपूजा च अपमृत्युरिति क्रमात् ॥ ६१ ॥

अथ षडशीतिफलम्—

मुखे चैक करे वेदा पादयुग्मे द्वय द्वयम् ।
क्रोडे बाणास्तथा वेदा करे सव्येतरेऽपि च ॥ ६२ ॥
द्वय द्वय तथा नेत्रे मस्तके त्रितय दिशेत् ।
एकश्चैव तथा गुह्ये षडशीतिरिभे फलम् ॥ ६३ ॥
मुखे दु ख करे लाभ पादयोर्भ्रमण हृदि ।
कान्ता स्याद्दक्षिणकरे परे हस्ते व बन्धनम् ॥ ६४ ॥
सम्मान नेत्रयोश्चैव अपमानन्तु मस्तके ।
गुह्ये चैव भवेन्मृत्यु षडशीतिफलश्रुति ॥ ६५ ॥

अथ सक्रान्तिषु वृष्टौ कालार्घ फलमुक्त वशिष्ठेन—

अजकन्यामृगकर्किणि सक्रान्तौ यदि भवेद्वर्षा ।
आमयडामरभूभृद्युद्धमनर्घत्वाद्यवृष्टिश्च ॥ ६६ ॥

वृषवृश्चिककुलमकरे वृष्टि स्यात्सक्रमे समये ।
विस्फोटामयतस्करपीडा वृष्टि कृशानुभयम् ॥ ६७ ॥

अथ सक्रान्तिनामान्याह श्रीपति —

उग्रक्षिप्रचरैर्मित्रध्रुवमिश्राख्यदारुणै ।
ऋक्षै सक्रान्तिरर्कस्य घोराद्या क्रमशो भवेत् ॥ ६८ ॥

फलमाह, नारद —

शूद्रतस्करवैश्यश्च देवभूपवरा क्रमात् ।
अनुक्तानाञ्च सर्वेषा घोराद्या सुखदा स्मृता ॥ ६९ ॥

द्मादेषाः ब्राह्मणा । अनुक्तानां चाण्डालादीनाम् ।

स्वनक्षत्रात्सक्रान्तिफलमाह, वशिष्ठ —

सक्रान्तौ ग्रहणर्क्षे वा जन्मन्यूभयपार्श्वयोः ।
नेष्ट त्रय षट् शुभद पर्यायाच्च पुन पुन ॥
हानिर्वृद्धि स्थानहानिस्तथा प्राप्तिरिति क्रमात् ॥ ७० ॥

अन्यच्च —

सक्रान्त्यधरनक्षत्राद् गणयेज्जन्मभावधि ।
त्रिक षट्क त्रिक षट्क त्रिक षट्क पुन पुन ॥ ७१ ॥
पन्था भोगो व्यथा वस्त्र हानिश्च विपुल धनम् ॥ ७२ ॥

तत्राशुभफलदायां सक्रान्तौ दानमाह नारद —

तिलोपरि लिखेच्चक्र त्रिशूल च त्रिकोणकम् ।
तत्र हेम विनिक्षिप्य दद्याद्दोषापनुत्तये ॥ ७३ ॥

अथ मलमासक्षयमासयोर्लक्षणमाह वशिष्ठ —

यस्मिन् दर्शस्यान्ताद्र्वागेवापर दर्शम् ।
उल्लङ्घ्य भवति भानो सक्रान्ति सोधिमास स्यात् ॥ ७४ ॥
आद्यन्तदर्शयोर्मध्ये भानोरेव तयोर्यदा ।
सक्रान्तिद्वितयञ्चेत्स्यान्न्यूनमास स उच्यते ॥ ७५ ॥

कश्यप —

यस्मिन्मासेर्कसक्रान्तिर्दर्शान्तात्प्राक् पुर सरम् ।
दर्शमुल्लङ्घ्य भवति स ससर्पोधिमासक ॥ ७६ ॥
आरभ्य शुक्लप्रतिपत्प्रवेशात्सक्रमद्वयम् ।
आगामीन्दुक्षयान्तात्प्राक् न्यूनाख्यस्त्वहर्पति ॥ ७७ ॥

स्फुटार्कसंक्रमाद्विद्यान्न्यूनमासाधिमासकौ।
मासौ न्यूनाधिकौ तौ तु सर्वकर्मबहिष्कृतौ ॥ ७८ ॥

तथाच—

अमावास्याद्वय यत्र रविसंक्रान्तिवर्जितम्।
मलिम्लुच स विज्ञेयो गर्हित सर्वकर्मसु ॥ ७९ ॥

अथ क्षयमासे मृतस्य मासद्वयमिश्रितत्वादेकोद्दिष्टं कदाकर्तव्यमित्युक्त स्मृतौ—

तिथ्यर्धे प्रथमे पूर्वे अपरस्मिन्परस्तथा।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥ ८० ॥ इति।

अथ मलमासे किमकर्तव्यं किं कर्तव्यमित्याह स्मृति —

मलिम्लुचस्तु मासो वै मलिन पापसम्भव।
गर्हित पितृदेवेभ्य सर्वकर्मसु त त्यजेत् ॥ ८१ ॥

बृहस्पतिः—

नित्यनैमित्तिके कुर्यात्पूर्वतः सन्मलिम्लुचे।
तीर्थस्नान गजच्छाया प्रेतश्राद्ध तथैव च ॥ ८२ ॥

नित्यमहरहः क्रियमाणमन्यदप्यावश्यक पूजादिकम्। नैमित्तिक ग्रहणजन्मचन्द्रो परागादिश्राद्धम्। तीर्थस्नान प्रथमेतरतीर्थस्नानम्। प्रथमस्नाने दोष एव। मलिम्लुच त्वनावृत्त तीर्थस्नानमपि त्यजेत्। इत्युक्तत्वात्। अनावृत्त प्रथममित्यर्थ।

प्रत्यब्द द्वादशे मासि कार्या पिण्डक्रिया बुधै।
क्वचित्त्रयोदशेपि स्यादाद्य मुक्त्वा तु वत्सरम् ॥ ८३ ॥

इति स्मृति। अस्यार्थ —प्रतिवर्षं सांवत्सरिकं श्राद्ध द्वादशे मासि क्षयाहे कर्तव्यम्। यदि तु द्वादशमासाभ्यन्तरे मलिम्लुचो भवति तदा मलिम्लुच एव द्वादशे मासि श्राद्ध कर्तव्यम्। तथा च स्मृतिः—

असंक्रान्तेपि कर्तव्यमाब्दिक प्रथम द्विजै ॥ ८४ ॥

इत्यसंक्रान्ते = संक्रान्तिशून्ये मलमासेऽपीत्यर्थः। यदि तु द्वादशान्मासादन्या मास एकादशमासाभ्यन्तरेऽधिमासो भवति तदा पञ्चदशमासिकानि भवन्ति। त्रयोदशे मासि सपिण्डनम्। यदि संवत्सराभ्यन्तरेऽधिमासो भवति तदा मासिकार्थं दिनमेकं वर्धयेदिति। एवञ्च मलिम्लुचे शुक्लप्रतिपदाद्यमावस्यान्ते यस्यां कस्याञ्चि त्तिथौ यो म्रियते तस्यापि पञ्चदशमासिकानि भवन्ति। तथा—

गर्भे वार्द्धपि कृत्ये च मृतानाम्पिण्डकर्मसु।
सपिण्डीकरणे चैव नाधिमास विदुर्बुधा ॥ ८५ ॥

सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धिकं भवेत् ।
इष्टं वाऽप्यथ वा पूर्त्तं तन्न कार्यं मलिम्लुचे ॥ ८६ ॥

अत्रापि प्रथमाब्दिकव्यतिरेकनिषेधः ।

तथाच—

जातकर्मणि यच्छ्राद्धं नवश्राद्धन्तथैव च ।
प्रतिसम्वत्सरश्राद्धं मलमासेऽपि तत्स्मृतम् ॥ ८७ ॥
प्रतिसंवत्सरश्राद्धमशौचात्पतितञ्च यत् ॥ ८८ ॥

नवश्राद्धं प्रेतश्राद्धं अशौचादिरुपलक्षणम् । तेनाशौचादिना सांवत्सरिकश्राद्धं यन्नयतकाले कृतं नास्ति तदशौचाद्यपगमे मलिम्लुचेप्यागते कुर्यादित्यर्थः । इत्यादिकं स्मृत्यादौ द्रष्टव्यमस्माभिर्मलमासे प्रसंगेनैव लिखितम् ।

इति कृत्यतत्त्वे संक्रान्तिप्रकरणम् ।



## अथ वारुण्यादियोगप्रकरणम्

देवशाम्बवे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा ॥ १ ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥ २ ॥

अथ महामहावारुणी—

शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥ ३ ॥

अथ गोविन्दद्वादशीयोगमाह कृत्यसारे—

फाल्गुनस्यासिते पक्षे कुम्भस्थे दिवसाधिपः।
जीवे धनुषि संस्थे च शोभने रविवासरे ॥ ४ ॥
पुष्यर्क्षेण च संयुक्ता गोविन्दद्वादशी मता।
गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम्।
विष्णुलोकमवाप्नोति मोक्षान् गंगाम्बुमज्जनात् ॥ ५ ॥

पुरुषोत्तमं जगन्नाथक्षेत्रम्। तत्र मन्त्रपाठः—

महापातकसंघाते यानि पापानि सन्ति मे।
गोविन्दद्वादशी नाम सर्वपापहरा तिथिः ॥ ६ ॥
फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि।
गोविन्दद्वादशी नाम सर्वपापहरा तिथिः ॥ ७ ॥

अथ महाज्येष्ठी—

ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।
पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता ॥ ८ ॥

अथ विजयायोगः—

श्रवणेन समायुक्ता मासि भाद्रपदे सिता।
द्वादशी सा महापुण्या स्नाता च विजया मता ॥ ९ ॥

अथार्द्धोदयमहोदययोगौ—

श्रवणार्कव्यतीपातोऽमा वै पौषमाघयोः ।
अर्धोदयः स विज्ञेयः किञ्चिन्न्यूनं महोदयः ॥ १० ॥

अथ दशहरायोगः

ज्येष्ठशुक्ला च दशमी भवेद्वै भौमवासरे ।
हस्तनक्षत्रेण संयुक्ता तस्माद्दशहरा स्मृता ॥ ११ ॥

अथ व्यतीपातयोगः—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥ १२ ॥

अथ रोहिणीयोगः—

प्रतिपद्रोहिणीयुक्ता मार्गे मासि सिते भवेत् ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समाः ॥ १३ ॥

अथाद्भुतानि ज्योतिस्सारे—

मद्राज्येष्ठानुराधाभिजिदथ श्रवणापादसंज्ञोत्तरे भे
पूर्वाषाढादितत्राद्भुतमनु यदा मण्डलं स्यान्महेन्द्रम् ।
क्षोणी शस्येन पूर्णा मुदितजनपदाः पुष्पिता जीवृक्षा
लोको रोगैर्विमुक्तो भवति नरपतिर्धर्मचित्तो दयालुः ॥ १४ ॥

स्वात्यादित्यमृगार्कहस्तसहिता चित्रोत्तराफल्गुनी
भेष्वेतेषु च तद्भवेयदि तदा वायोर्भवेन्मण्डलम् ।
एतस्यैव च दोषभावबहुलं शोकक्षुधापीडिता
भग्ना वृक्षगणाश्च वातविभवैश्चूर्णा तथा पांशुभिः ॥ १५ ॥

पूर्वाभाद्रपदा भगश्च भरणी पुष्यो विशाखा मघा
वह्निश्चात्र च तद्भवेयदि तदा वह्नेः पुनर्मण्डलम् ।
निर्मेघं गगनम्भवेद्दिनकरं चण्डातपस्तापको
लोको रोगसमाहितो दहति च क्षोणी सदा पावकः ॥ १६ ॥

भूकम्पे विशेषः—

मीने कुलीरे मकरे च कूर्मः कुम्भे तुलायां मिथुने फणीशः ।
सिंहे धनुः कन्यकयोर्धरित्री मेषे वृषाल्पो दिगिभाश्चलन्ति ॥१७॥
कच्छपे चातिमृत्युर्दुर्भिक्षमथ पन्नगे ।
सुभिक्षं सर्वराष्ट्रेषु पृथिव्याश्चलिते गजे ॥ १८ ॥

यत्रैव जाता रघवोरगेहिनी शीळाधिनाथोऽस्ति यतः स्वपन्य ।
यत्राधिराजो द्विज एव श्री श्री श्री रुद्रसिंह  सुरराजतुल्य ॥ १६ ॥
एतादृशे वै तिरभुक्तसज्ञके सुनिर्ममेह कृतितत्त्वसमहम् ।
ग्रन्थाननेका॰प्रविलोक्य यत्नतो विघ्नेश्वरो मैथिलभूसुरो मुदा ॥२०॥
पञ्चाङ्कशैलैरमिते शके मधौ वलक्षपक्षे गिरिजेश्वरे तिथौ ।
दिनेशसूनो सुदिने सुमोहना मामे स्वगेहे परिवर्त्तमान ॥

इति दैवज्ञशिरोमणिमैथिलपण्डितश्रीविघ्नेश्वरोपनामकश्रीकृपानीशर्मविरचित

कृतितत्त्वसमह समाप्तः

---

